Digitized by Sarayu Trust Foundation Delhi and eGangotri.

# ॥ ❋ ॥ अथ वास्तुप्रतिष्ठासंग्रहप्रारम्भः ॥ ❋ ॥

अस्य ग्रन्थस्य सर्वेऽधिकाराः स्वाधीनीकृताः सन्ति.

स्तथा ॥
पाशश्च शूलं ग
ब्रह्मविष्णुशिवादी
तथा ॥ वे
वेदिकोपरि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

...णेशाय नमः

# अथ वास्तुप्रतिष्ठासंग्रह विषयानुक्रमणिका ।



...ाशश्च शूलं ...
॥ ब्रह्मविष्णुशिवादी...
...स्तथा ॥ वे...
वेदिकोपरि...

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





॥ इति वास्तुप्रतिष्ठासंग्रहविषयानुक्रमणिका समाप्ता ॥



पुस्तक मिलनेका पता—खेमराज श्रीकृष्णदास,—" श्रीवेङ्कटेश्वर " स्टीम्-प्रेस—बंबई.

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

॥ श्रीगणेशाय नमः ॥ श्रीष्टदेवाय नमः ॥ अथ श्रीवास्तुप्रतिष्ठासंग्रहप्रारंभः ॥ श्रीगणेशं नमस्कृत्य पार्वतीं शंकरं परम् ॥ मया श्रीरामचंद्रेण क्रियते वास्तुसंग्रहः ॥ १ ॥ मंडपस्य विधिं पूर्वं कुर्याच्छुभदिने बुधः ॥ हस्तषोडशविस्तीर्णं द्वादशाष्ट मितं तथा ॥ २ ॥ मण्डपं करणीयं वै सर्वकार्येषु शोभनम् ॥ तत्र वै मंडपं स्तंभैर्हरितैः षोडशैर्वृतम् ॥ ३ ॥ तिर्यक्स्तंभैः षोडशकैर्भूपैराच्छादनार्थकैः ॥ चतुर्भिः कटकं मध्ये कार्यं कुंभध्वजाश्रयम् ॥ ४ ॥ आच्छादयेद्रक्तवस्त्रैः श्वेतैर्वा तृणपल्लवैः ॥ शिरोध्वजपताकाभ्यां स्वर्णकुंभेन शोभितम् ॥ ५ ॥ एवं शोभायमानं तद्द्वाश्चतुष्टयसंयुतम् ॥ चतुर्षु स्थापयेद्द्वाःसु तोरणानां चतुष्टयम् ॥ ६ ॥ नैयग्रोधं पैप्पलं चौदुंबरं च पलाशजम् ॥ उत्तरस्यां च पूर्वस्यां दक्षिणस्यां तथा पुनः ॥ ७ ॥ पश्चिमायां शंखचक्रगदापद्मादिसंयुतम् ॥ दशदिक्षु द्वारपानां पताकाध्वजवाहनैः ॥ ८ ॥ शस्त्रैश्च शोभमानं तत्पूर्वादिक्रमतो यथा ॥ पीता रक्ता तथा कृष्णा कृष्णा श्वेता पुनर्यथा ॥ ९ ॥ धूम्रवर्णा स्वर्णवर्णा रक्ताभा रक्तवर्णिका ॥ मेघाभाऽम्बपवारुण्यो र्मध्ये ध्वजपताकयोः ॥ १० ॥ वर्णेन तुल्यता ज्ञेया वाहनानि पुनर्यथा ॥ हस्ती मेषो लुलायश्च कपोतो मकरस्तथा ॥११॥ हरिणो नरयानश्च वृषो हंसो हयो दश ॥ शस्त्राणि क्रमतो वक्ष्ये वज्रमग्निशिखा पुनः ॥१२॥ दंडः खड्गश्च पाशश्च शूलं गदा त्रिशूलकम् ॥ कमंडलुः शंखचक्रगदापद्मायुधं पुनः ॥ १३ ॥ मध्ये महाध्वजो हंसो गरुडोक्षादिभिर्युतः ॥ ब्रह्मविष्णुशिवादी[illegible]पां स्थापने क्रमतस्तथा ॥ एवंविधं मंडपं च रचयेच्च यथारुचि ॥ १४ ॥ मंडपांतश्चतुष्कोणे चतस्रोवेदिकास्तथा ॥ वे[illegible] प्रयत्नेन चतुरस्रा करोच्छ्रिता ॥ मंडपस्य च त्र्यंशांशे सर्वतोभद्रमंडलम् ॥ १५ ॥ विलिखेत्सर्वतोभद्रं वेदिकोपरि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तिर्यगूर्ध्वगता रेखाः कुर्यादेकोनविंशतिम् ॥ १६ ॥ खंडेंदुस्त्रिपदः कोणे शृंखलाः पंचकोष्ठकाः ॥ एकादशपदा व
नवभिः पदैः ॥ १७ ॥ चतुर्विंशत्पदा वापी विंशत्या परिधिः पदैः ॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं लिखेत् ॥
श्वेतेंदुः शृंखला कृष्णा वल्ली नीलेन पूरयेत् ॥ भद्रारुणा सिता वाप्यः परिधिः पीतवर्णकः ॥ १९ ॥ बाह्यांतरदलैः श्वे
कर्णिकाः पीतवर्णिकाः ॥ खंडेंदुः शृंखला वापि वल्लीभद्रं तु पंचकम् ॥ २० ॥ परिध्यावेष्टितं सर्वं बाह्ये सत्त्वं रजस्तमः ॥
सर्वं तत्र समुद्दिष्टं सर्वतोभद्रमंडलम् ॥ २१ ॥ अग्निकुंडं स्थंडिलं वा मंडलादुत्तरे पुनः ॥ मंडपांतश्चतुर्दिक्षु देवानां स्थापनं
यथा ॥ २२ ॥ ऐशान्यां गणनाथस्य ग्रहाणां कलशस्य च ॥ स्थापनं पूजनं कुर्यादाग्नेय्यां मातृमंडले ॥ २३ ॥ गणपति
श्रीयुताः स्थाप्यास्तथा षोडश मातृकाः ॥ वसोर्द्धारा घृताक्ता च रक्षिकाः पंच सप्त वा ॥ २४ ॥ तत्रैवाभ्युदयस्थानं
पितॄणां प्रीतिहेतवे ॥ नैर्ऋत्यां स्थापयेद्वास्तुमंडले वास्तुदेवताः ॥ २५ ॥ एकाशीतिपदैः स्थाप्याश्चत्वारिंशच्च पंच च ॥
चरक्याद्यष्टौ दश च लोकपालास्तु तत्र च ॥ २६ ॥ वायव्यां योगिनीवेद्यां चतुःषष्टिं च योगिनीः ॥ स्थापयेद्भैरवांस्तत्र
द्विपंचाशन्मितान्पुनः ॥ २७ ॥ एकोनपंचाशन्मिता वै मरुतां तु गणास्तथा ॥ स्थाप्या गोधूमपुंजेषु तंडुलेषु च वै पुनः ॥
॥ २८ ॥ ततः सुलग्ने सुधिया सपत्नीकेन कर्मणः ॥ कर्त्रा सर्वौषधिजलैर्हरिद्रातैलसंयुतैः ॥ २९ ॥ मलस्नानं च कर्तव्यं
शुद्धस्नानं पुनःपुनः ॥ पञ्चगव्याशनं कृत्वाचमनं मुखमार्जनम् ॥ ३० ॥ अपवित्रः पवित्रो वेत्यात्मानं प्रोक्षयेत्सुधीः ॥
मंडपांतः प्रविशति चाग्नेय्यां मातृमंडलम् ॥ ३१ ॥ गणेशं पूजयित्वाथ गणेशश्रीयुताः पुनः ॥ मातृकाः पूजयेत्पश्चाद्घृत

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

मातॄः पुनर्यजेत् ॥ ३२ ॥ नांदीश्राद्धं च कृत्वाथ पुण्याहवाचनं ततः ॥ पुण्याहवाचनस्यादावाचार्यं ब्रह्म चर्त्विजः ॥ ॥ ३३ ॥ वृत्वा पुष्कलद्रव्येण शास्त्रोक्तेन यथाविधि ॥ वस्त्रयुग्मं तथोष्णीषं कुंडले कंठभूषणम् ॥ ३४ ॥ अंगुलीभूषणं चैव मणिबंधस्य भूषणम् ॥ एतानि चैव सर्वाणि प्रारंभे धर्मकर्मणाम् ॥३५॥ पुरोहिताय दत्त्वाथ ऋत्विग्भ्यः संप्रदापयेत् ॥ संपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ॥ ३६ ॥ अपूज्य कारयेत्कर्म किल्बिषेण च युज्यते ॥ यजमानोथ वृत्त्वैवं ब्राह्मणान्प्रार्थयेत्तदा ॥ ३७ ॥ अस्य यागस्य निष्पत्त्यै भवंतोऽभ्यर्थिता मया ॥ सुप्रसन्नैः प्रकर्तव्यमेतत्कर्म यथोदितम् ॥ ३८ ॥ मिलितैर्ब्राह्मणैः कार्यं यजमानकरे पुनः ॥ रक्षाबंधनमेतद्धि कंकणं शास्त्रभाषितम् ॥ ॥ ३९ ॥ दूर्वा यवांकुराश्चैव बालकं चूतपल्लवाः ॥ हरिद्राद्वयसिद्धार्थशिखिपक्षोरगत्वचः ॥ ४० ॥ कंकणौषधयश्चैताः कौतुकाख्या नव स्मृताः ॥ भाजनस्थान्करपुटे धृत्वा मंत्रान्पठेत्तथा ॥ ४१ ॥ गणाधिपं नमस्कृत्येत्यादिरक्षोहणांस्तथा ॥ दिग्बंधे च तथा जाते यजमानकरे पुनः ॥ ४२ ॥ रक्षाबंधनमेतत्स्यात्कंकणे च सुमंत्रितम् ॥ तिलकं च प्रकर्त्तव्यं पुण्याहवाचनं ततः ॥ ४३ ॥ पुण्याहवाचनांते च श्रीफलेनैव संयुतम् ॥ सपत्नीकस्तदा धान्यपुंजे कुंभं च स्थापयेत् ॥ ४४ ॥ गंधाक्षतैः पुष्पफलैः पंचपल्लवचंदनैः ॥ वेष्टितं रक्तवस्त्रेण रक्षिकाभिस्तु मालया ॥ ४५ ॥ शोभितं पूजयेत्तत्र स्मृत्वा गणपतिं तदा ॥ कुंभोपरि ग्रहान्देवान्वरुणं च प्रपूजयेत् ॥ ४६ ॥ पंचगव्यप्रोक्षणं च विकिरेत्सर्षपां

१ ब्रह्म–ब्रह्माणम्–इत्यर्थः ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



स्तथा ॥ वेदघोषं च शृण्वानस्तूर्यघोषेण संयुतः ॥ ४७ ॥ मंडपं दक्षिणीकृत्य प्रविशेद्वास्तुपश्चिमम् ॥ मंडपांतर्धान्यपुंजे कुंभं धृत्वाथ पूजयेत् ॥ ४८ ॥ मंडपांगस्य शुद्धिं च कृत्वा पुरुषसूक्ततः ॥ आचार्यस्तु स्वहस्तेन विकिरेद्गौरसर्षपान् ॥ ॥ ४९ ॥ पंचगव्यप्रोक्षणं च प्रोक्षणं च कुशोदकैः ॥ मंडपे मध्यस्थूणातः पूजा स्नानं च गंधतः ॥ ५० ॥ द्वारतोरणयोः पूजां कृत्वा ध्वजपताकयोः ॥ द्वारेषु स्थापयेत्कुम्भान्वेदपाठसमन्वितान् ॥ ५१ ॥ देवयोग्यो बलिर्देयो मंत्रोच्चारणपूर्वतः ॥ ऐशान्यां सर्वभूतेभ्यो बलिं दत्त्वाथ पूजयेत् ॥ ५२ ॥ मंडपस्य शिरोदेशे पूजितव्यो महाध्वजः ॥ ऐशान्यां गणपत्यादि ग्रहास्तदधिदेवताः ॥ ५३ ॥ प्रत्यधिदेवताः पंच विनायकादयो दश ॥ लोकपालाः पूजितव्याः कलशे वरुणं तथा ॥५४॥ नैर्ऋत्यां वास्तुदेवानां शिख्यादीनां च पूजनम् ॥ कलशस्थापनं पूर्वं शंकूनां रोपणं पुनः ॥ ५५ ॥ बलिदानं पायसेन योगिनीनां पुनःपुनः ॥ मरुतां भैरवाणां च पूजनं चोपचारकैः ॥ ५६ ॥ पंचभिश्च प्रकर्तव्यं मध्ये मंडलदेवताः ॥ ब्रह्मादयः प्रधानांतं कलशे रुद्रसंज्ञकम् ॥ ५७ ॥ पूजनीया अग्निकुण्डे वह्निस्थापनपूर्वकम् ॥ अग्नेरानयनं विप्रगेहान्मंगलघोषतः ॥ ५८ ॥ एवं मंडलपूजाख्यं कर्म चैव तदंतके ॥ त्रिसूत्र्या स्तनकुंभ्या च धारा दुग्धेन वारिणा ॥ ५९ ॥ रक्षोघ्नेन च सूक्तेन पावमानेन मंडले ॥ प्रासादे मंदिरे चैव प्रागादितस्तु वेष्टनम् ॥ ६० ॥ त्रिसूत्र्या चैव कर्त्तव्यं होमकर्म समाचरेत् ॥ ग्रहेभ्यो नवभ्यश्चाधिदैवप्रत्यधिदेवताः ॥ ६१ ॥ विनायकादिपंचभ्यो लोकपालेभ्य एव च ॥ अष्टोत्तरसहस्रेण वाष्टोत्तरशतेन च ॥ ६२ ॥ अष्टाविंशतिना वाष्टाहुतिभिर्जुहुयात्पुनः ॥ शिख्यादिभ्यो वास्तुपीठदेवताभ्यस्तथैव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

च ॥ ६३ ॥ औदुंबरसमिद्भिश्च तिलाज्यपायसैस्तथा ॥ वास्तोष्पत इति पंचऋग्भिर्बिल्वादिपंचभिः ॥ ६४ ॥ सूर्यादीनां समिद्भिश्च वार्कादिनवभिस्तथा ॥ एवं होमं समाप्याथ गत्वा कर्मकुटीं पुनः ॥ ६५ ॥ अथाचार्यः स्विष्टकृद्धि होमशेषं समापयेत् ॥ ६६ ॥ ततस्तु वै दिक्पालेभ्यो ग्रहेभ्यो नवभ्यस्तथा ॥ प्रधानदेववास्तुपीठदेवताभ्यस्तथैव च ॥ ६७ ॥ बलिदानं दीपदधिमाषभक्तयुतं स्मृतम् ॥ क्षेत्रपालाय च चतुर्मुखदीपयुतं तथा ॥ ६८ ॥ ततः पूर्णाहुतिर्देया पूर्णपात्रविमोचनम् ॥ स्रुवेण भस्म संगृह्य तदग्रे वह्निपूजनम् ॥ ६९ ॥ प्रविश्य निधिशालायां श्रियं स्थाप्याथ दक्षिणे ॥ पूजयेद्गंधधूपाद्यैरग्निकोणे ततः परम् ॥ ७० ॥ गर्तं विधाय वै तत्र पदे आकाशसंज्ञके ॥ वृष वास्तुं पूजयेच्च यजमानः समाहितः ॥ ७१ ॥ यजमानस्याभिषेकं सपत्नीकस्य कारयेत् ॥ दूर्वाभिः सर्त्विगाचार्यः समस्त कलशोदकैः ॥ ७२ ॥ तदग्रेऽवभृथस्नानं वस्त्राभरणसंयुतः ॥ गृहे प्रवेशनं कृत्वा कुर्यात्पुण्याहवाचनम् ॥ ७३ ॥ आशिषोऽथ गृहीत्वा त्वाचार्यादीनां च पूजनम् ॥ हस्त्यश्वरथवर्यैश्च गोभूमिरजतादिभिः ॥ सहस्रदक्षिणाद्यैश्च पूजयेद्विधिवद्द्विजान् ॥ ७४ ॥ अथाचार्यादयो विप्राः फलदूर्वाक्षतैर्युताः ॥ यजमानायाशिषो दद्युर्दक्षिणादिसुतर्पिताः ॥ ७५ ॥ अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः ॥ गृहे वा पत्तने कुर्यान्न स दुःखमवाप्नुयात् ॥ ७६ ॥ न व्याधिजं भयं तस्य न च बंधुधनक्षयः ॥ जीवेद्वर्षशतं स्वर्गे कल्पमेकं वसेन्नरः ॥ ७७ ॥ चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥ वैशाखे धन रत्नानि ज्येष्ठे मृत्युं तथैव च ॥ ७८ ॥ आषाढे श्रावणे चैव भृत्यमित्रे तथैव च ॥ प्राप्नुयात्पुरुषो नित्यं हानिं भाद्रे तथैव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



च ॥ ७९ ॥ पत्नीनाशं चाश्वयुजे कार्तिके धनधान्यकम् ॥ मार्गशीर्षे तथा वित्तं पौषे तस्करतो भयम् ॥ ८० ॥ लाभं तु बहुशो विंद्यादग्निं माघे विनिर्दिशेत् ॥ कांचनं फाल्गुने पुत्रानिति कालबलं स्मृतम् ॥ ८१ ॥ अश्विनी रोहिणी मूलमुत्तरात्र यमैंदवम् ॥ स्वाती हस्तोऽनुराधा च गृहारंभे प्रशस्यते ॥ ८२ ॥ आदित्यभौमौ वर्ज्यौ च सर्वे वाराः शुभावहाः ॥ ८३ ॥ इति वास्तुप्रतिष्ठा प्रक्रिया समाप्ता ॥ ॥ अथ वास्तुशांतिप्रयोगः ॥ ॥ तत्रादौ स्वस्तिवाचनम् ॥ हरिः ॐ स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १ ॥ ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥ ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि ॥ वैष्णवमसि विष्णवे त्वा ॥ ३ ॥ ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ४ ॥ ॐ द्यौः शांतिरंतरिक्षꣳशांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिः ॥ वनस्पतयः शांतिर्विश्वे देवाः शांतिर्ब्रह्म शांतिः सर्वꣳशांतिः शांतिरेव शांतिः सा मा शांतिरेधि ॥ ५ ॥ इति स्वस्तिमंत्राः ॥ तत्रादौ भूमिं परीक्षेत ॥ चतुर्दंडा अविच्छिन्ना समनता इयं भरिति गृह्णीयात् ॥ तस्यां गां सवत्सां सप्तधान्यमव्रणं सवस्त्रं हेमगर्भं फलपुष्पजलान्वितं कलशं निधाय तत्सदिति कालज्ञानं कृत्वा अमुकगोत्रोऽहं मम नूतननिर्मितगृहे कृमिकीटपतंगादिवृक्षौषध्यादिजीवहिंसानिवृत्त्यर्थं गृहप्रवेशकर्मणो निर्विघ्नतासिद्ध्ये गणपत्यादिस्मरणपूर्वककलशभूम्यादिध्यानस्थापन



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पूजनबलिदानानि करिष्ये ॥ तदंगत्वेन शुद्धिसंपादकषड्ऋग्जपपूर्वकमंडपरचनामहं करिष्ये ॥ तत्र गणपत्यादिपूजनं सामान्यतो विधाय रक्षातिलकं कृत्वा तस्मिन्मेरुकर्णिकाशोभितां शैलवननदीसमायुक्तां सागरपरिवेष्टितां भूमिं ध्यात्वा हस्ते पुष्पांजलिमादाय आवाहनम् ॥ रत्नाकरे विष्णुना त्वं धृता वाराहरूपिणा ॥ आगच्छ वरदे धात्रि यज्ञेऽस्मिञ्छुभदायिनी ॥ इति भूमिमावाह्य ॥ ॐभूम्यैनमः पुष्पांजलिं क्षिपेत् ॥ ॐभूम्यैनमः आसनं समर्पयामि ॥ ॐ भूम्यै पाद्यं स० ॥ ॐ भूम्यै अर्घ्यं० ॥ ॐभूम्यै आचमनं स० ॥ ॐभूम्यै स्नानं स०॥ ॐभूम्यै पुनराचमनं०॥ गंधपुष्पधूपदीपनैवेद्यपुनराचमनतांबूलदक्षिणाद्रव्यप्रदक्षिणाश्च कुर्यात् ॥ ततः स्वस्वदिक्षु इंद्रादीन्पूजयेत् ॥ पूर्वे इंद्राय नमः । आग्नेय्याम् अग्नये नमः । दक्षिणे यमाय नमः । नैर्ऋत्यां निर्ऋतये नमः । पश्चिमे वरुणाय नमः । वायव्यां वायवे नमः । उत्तरे कुबेराय नमः । ऐशान्याम् ईशानाय नमः । निर्ऋतिपश्चिमयोर्मध्ये अनंताय नमः । ईशानपूर्वयोर्मध्ये ब्रह्मणे नमः । इति दिक्पालांश्चाभ्यर्च्य पुनः पूर्वादिदिक्षु ॐइंद्राय एष दधिमाषदीपभक्तबलिर्न मम ॥ इत्यादिनाममंत्रैः प्रत्येकं माषदधिबलिं दद्यात् ॥ पुनः द्वितीयं बलिमेकस्मिन्पात्रे माषदधिदीपसहितमपनीय सूर्यादिग्रहेभ्य इमं बलिं समर्पयामि । पुनस्तृतीयं बलिमुपनीय वास्तुपुरुषायेमं बलिं समर्पयामि ॥ पात्रे जलगंधपुष्पाणि कृत्वा ततोऽर्घ्यम् ॥ वसुधे पूजितासि त्वं विष्णुना शंकरेण च ॥ पार्वत्या चैव गायत्र्या स्कंदवैश्रवणादिभिः ॥ इंद्राद्यैः पूजितासि त्वं सर्वधर्मजिगीषया ॥ सौभाग्यं देहि पुत्रांश्च धनं धान्यं शुभां प्रजाम् ॥ गृहाणार्घ्यमिमं देवि कर्मसिद्धिं प्रयच्छमे ॥१॥ ततः प्रार्थना ॥ त्वं देवि खननार्थे तु पूजां

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



गृहाण मे मखे ॥ पूजनाच्छेषकूर्माभ्यां शुद्धां वृद्धिं प्रयच्छ मे ॥ २ ॥ यज्ञभागं प्रतीक्षस्व सुखार्थं प्रणमाम्यहम् ॥ तवोपरि करिष्यामि मंडपं शुभलक्षणम् ॥ ३ ॥ बीजानि विविधानीह प्ररोहंति सदा त्वयि ॥ नानाकर्मसु कुशलेषु शेषस्य शिरसि स्थिता ॥ धरणी काश्यपी क्षोणी रसा विश्वंभरा च भूः ॥ निर्विघ्नं मम कर्मेदं यथा स्यात्त्वं तथा कुरु ॥४॥ इति भूमिपूजा ॥ ततो मंडपकरणार्थं खातस्थानानि निश्चित्य खातस्थानानि दर्भैः पंचगव्यैः पंचामृतैः सिंचेत् ॥ स्योनापृथिवीति मंत्रस्य मेधातिथिर्ऋषिः पुर उष्णिक् छन्दः पृथिवी देवता मार्जने विनियोगः ॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छानुःशर्म्मसुप्प्रथाः ॥ १ ॥ अनेन मंत्रेण सर्वाणि खातस्थानानि संमार्ज्य ॥ ॐसिंचंतिपरिषिंचंत्युत्सिचंति पुनंतिच ॥ सुरायै बभ्र्वै मदेकिंत्वो व्वदतिकिन्त्वः ॥ अनेन मंत्रेण सर्वत्र पंचामृतैः पंचगव्यैः सिंचेत् ॥ सर्वत्र गंधाद्यैः संपूज्य अर्घ्य पात्रे जलपुष्पाक्षतान्कृत्वा हस्ताभ्यां पात्रमादाय अर्घ्यं दद्यात् ॥ ततः पुष्पांजलिमादाय इमं मंत्रं पठेत् ॥ उपचारानिमां स्तुभ्यं ददामि परमेश्वरि ॥ भक्त्या गृहाण देवेशि त्वामहं शरणं गतः ॥ ततः पायसापूपसक्त्वादिद्रव्यं पात्रे कृत्वा सपरिवारायै भूम्यै इमं बलिं समर्पयामि इति बलिं दद्यात् ॥ ततः सूत्रधारं विश्वकर्माणं पूजयेत् ॥ नमामि विश्वकर्माणं सर्वसूत्रप्रवर्त्तकम् ॥ मंडपादिप्रसिद्ध्यर्थं सर्वसिद्धिसमृद्धिदम् ॥ अंगुलनिर्माणं पूजयेत् ॥ अंगुलादिप्रमाणार्थं निर्मितो विश्वकर्मणा ॥ अतस्त्वां पूजयामीह मंडपेष्टं प्रसाधय ॥ ततः खननांगमाधारशक्त्यादीनां पूजनम् ॥ ॐआधारशक्त्यै नमः ॥ ॐकूर्माय नमः ॥ ॐअनंताय नमः ॥ ॐपृथिव्यै नमः ॥ ॐवास्तुपुरुषाय नमः ॥ ततः इष्टकापूजनम् ॥ इष्टकाभ्यः





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पाद्यं समर्पयामि ॥ अर्घ्यं समर्पयामि ॥ आचमनं समर्पयामि ॥ स्नानवस्त्रगंधपुष्पधूपदीपनैवेद्यादिभिः संपूज्य ॥ ततः प्रार्थना ॥ नंदिनी देवि वासिष्ठे वसुभिः पूजिता सती ॥ जये भार्गवदायादे प्रजानां जयमावह ॥ पूर्णे गिरीशदायादे पूर्णान्कामान्कुरुष्व मे ॥ भद्रिके श्यामदायादे कुरु भद्रां मतिं मम ॥ प्रजापतिसुते देवि चतुरस्रे महीसुते ॥ सुभगे सुव्रते देवि गृहे भार्गवि रम्यताम् ॥ अव्यंगे चाक्षयबले पूर्णे चांगिरसः सुते ॥ इष्टदेवप्रतिष्ठासु त्वां प्रतिष्ठापयाम्यहम् ॥ देशग्रामपुरक्षेत्र गृहस्वामिषु सौख्यदा ॥ मनुष्यपशुहस्त्यश्वधनवृद्धिकरी भव ॥ इति संप्रार्थ्य ॥ ततो वेदिकोणेषु इष्टकाप्रक्षेपः ॥ ततो यज्जाग्रतः इति षड्ऋचो जपेत् ॥ ॐयज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ॥ दूरंगमं ज्योतिषां ज्योतिरेकं तन्मेमनः शिवसंकल्पमस्तु ॥ १ ॥ येन कर्माण्यपसो मनीषिणा यज्ञे कृण्वंति विदथेषु धीराः ॥ यदपूर्वं यक्षमंतःप्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥२॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरंतरमृतं प्रजासु ॥ यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥ येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ॥ येन यज्ञस्तायते सप्तहोता तन्मे मनःशिवसं ल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेभीशुभिर्वाजिन इव ॥ हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥ तत आचार्यः सूत्रधारश्च कुशास्तरणे शयीत ॥ ततो निशाशेषेण जातस्वप्नेन शुभाशुभफलं ज्ञात्वा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



प्राणादीन्संशोध्य व्यवहरेत् ॥ ततो मंडपरचना ॥ सूत्रेण कृतनवभागमंडपमध्यगतनवमभागे मंडलं कृत्वा तदुत्तरे कुंडं स्थंडिलं वा कुंडात्पूर्वे वा मध्ये वेति ॥ ततो नैर्ऋत्यकोणे वास्तुमंडलं कार्यम् ॥ ऐशाने वरुणकुंभस्तत्समीपे ग्रहपीठम् अग्निकोणे अष्टवसुवसोर्द्धाराजलमातृषोडशमातॄणां स्थापनम् ॥ वायव्यकोणे योगिनीस्थापनं गृहे कूपश्चेत् तत्रैव वायव्यामेव वारुणं मंडलं विधेयम् ॥ वंशकाष्ठकदलीस्तंभादिरचितवितानादियुते मंडपे पूर्वादिक्रमेण अश्वत्थ १ औदुंबर २ प्लक्ष ३ न्यग्रोध ४ तोरणानां स्थापनम् ॥ पीतरक्तश्यामकृष्णश्वेतधूम्रपीतरक्तमेघवर्णरक्तवर्णध्वजानां स्थापनम् ॥ मध्ये पंचवर्णमहाध्वजाः स्थाप्याः (११) तत्र गृहप्रवेशात्पूर्वेद्युः शुभेह्नि वास्तुशांतिं कुर्यात् ॥ मंडपपूजां त्वग्रे वक्ष्यामः ॥ परिच्छिन्नां भूमिं समचतुरस्रां कृत्वा यजमानः सर्वौषधिभिर्वारुणमंत्रैः सुस्नातः स्वलंकृतः सस्त्रीकः शुचिर्भूत्वा मातृकापीठसमीपे प्राङ्मुखः पत्न्या समन्वारब्धः ॥ स चेत्थं पत्न्याः अंचलकोणे रक्ताक्षतहरिद्रादूर्वाफलानि बद्ध्वा यजमानस्य शांतिविधौ वामपार्श्वे पत्नीमुपवेशयेत् " सर्वेषु धर्मकृत्येषु पत्नी दक्षिणतः सदा "–इति वचनात् । अन्यमते–"शांतिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु ॥ वामे ह्युपविशेत्पत्नी व्याघ्रस्य वचनं यथा ॥ " –इतिस्मरणात् ॥ अथ प्राणानायम्य गणपतिस्मरणपूर्वकं देशकालौ स्मरेत् तद्यथा–ॐश्रीमन्महागणाधिपतये नमः ॥ ॐश्रीलक्ष्मीनारायणाभ्यां नमः ॥ ॐउमामहेश्वराभ्यां नमः ॥ ॐएतत्कर्मप्रधानदेवताभ्यो नमः ॥ ॐइष्टदेवताभ्यो नमः ॥ ॐकुलदेवताभ्यो नमः ॥ ॐग्रामदेवताभ्यो नमः ॥ ॐवास्तुदेवताभ्यो नमः ॥ ॐवाणीहिरण्यगर्भाभ्यां नमः ॥ ॐशचीपुरंदराभ्यां नमः ॥ ॐमातापितृचरणकमलाभ्यां नमः ॥ ॐसर्वेभ्यो देवेभ्यो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नमः ॥ ॐसर्वेभ्यो ब्राह्मणेभ्यो नमोनमः ॥ निर्विघ्नमस्तु ॥ ॐसुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ ४ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ ५ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ एवं ध्यात्वा ॐअद्य श्रीब्रह्मणोऽह्नि० पुण्यतिथौ ॥ मम गृहे सकुटुंबस्य सपरिवारस्य सर्वारिष्टप्रशांत्यायुरारोग्यैश्वर्यसुखश्रीप्राप्त्यर्थं पुत्रपौत्रधनधान्यादिसंपत्प्रवृद्ध्ये अभिलषितमनोरथानां सिद्ध्यर्थं वास्तुकृतसर्वदोषोपशांतये शिख्यादिदेवताप्रीतये वास्तुशांतिकर्माहं करिष्ये ॥ तदंगत्वेन गणपतिपूजनवरुणपूजनरक्षर्त्विग्वरणपुण्याहवाचनग्रहवसोर्द्धारामातृकास्थापनप्रतिष्ठापूजनपूर्वक वृद्धिश्राद्धमहं करिष्ये ॥ मंडपभूमौ सर्षपविकिरणम् ॥ तत्र मंत्राः ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ १ ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन वास्तुशांतिं समारभेत् ॥२॥ भूतप्रेतपिशाचाद्या अपक्रामंतु राक्षसाः ॥ स्थानादस्माद्व्रजंत्वन्ये स्वीकरोमि भुवं त्विमम् ॥३॥ पश्चाद्वक्ष्यमाणरीत्या कृतपंचगव्येन गृहप्रोक्षणं मंडपप्रोक्षणं च ॥ गायत्र्या गोमूत्रम् ॐगोमंद्रूषुणासुत्त्याश्वांवद्यातमंश्विना ॥ वुर्तीरुंद्रानूपाय्यम्॥इति गोमयम्॥ॐआप्यांयस्वसमेंतुतेविश्वतं॑सोमुवृष्ण्यंम् ॥ भवावाजंस्यसंगुथे॥इतिक्षीरम्॥ॐदधि क्राव्णों अकारिषं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



जिष्णोरश्वस्य वाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ इति दधि ॥ ॐ घृतंमिमिक्षेघृतमस्य योनिर्घृतेश्रितो घृतम्वस्युधामं ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ इति घृतम् ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्मा अरंगमामवो यस्यक्षयाय जिन्वथ ॥ आपो जनयथाचनः ॥ इति कुशोदकं गृहीत्वा ॥ गायत्र्या सर्वाण्येकीकृत्य प्रणवेनालोड्य पंचगव्येन परिकल्पितां मंडपभूमिं प्रोक्षयेद्वा वृद्धिश्राद्धांते प्रोक्षयेत् ॥ ॐ गणानांत्वा गणपतिꣳहवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे ॥ निधीनांत्वा निधिपतिꣳ हवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ १ ॥ ॐविश्वानिदेवसवितर्दुरितानि परासुव॥यद्भद्रं तन्नआसुव ॥ २ ॥ ॐस्वस्तिनऽइंद्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ३ ॥ ॐद्यौः शांति रंतरिक्षꣳशांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शांतिर्विश्वे देवाः शांतिर्ब्रह्म शांतिः सर्वꣳशांतिः शांतिरेव शांतिः सा मा शांतरेधि ॥ ४ ॥ अथातः संप्रवक्ष्यामि गणयागं सुशोभनम् ॥ कामिके वासिके यज्ञे विवाहे व्रतसंयमे ॥ १ ॥ आदौ गणेश्वरः पूज्यः सर्वकामफलप्रदः ॥ मासमासाधिपः पूज्यो गणेशो यो भविष्यति ॥ तेन प्रपूज्यते यज्ञे मासाचार्यो गणेश्वरः ॥ योऽसौ मासपतिर्देवः सर्वविघ्नविनाशनः ॥ श्रीकृष्ण उवाच ॥ आदौ गणेश्वरः श्रेष्ठो विघ्ननाशो विनायकः ॥ सर्वकामकृतौ पूज्यो यज्ञकाले सनातनः ॥ मंडलं च



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ततः कुर्यात्कोष्ठानां द्वादश स्मृतम् ॥ सिंदूरस्थापितं देवमीशाने च विनायकम् ॥ क्रमयुक्तस्ततः स्थाप्यो मासमासाधिपः प्रभुः ॥ मार्गे गणपतिः पूज्यः पौषे चैव विनायकः ॥ गजवक्रो माघमासे भालचंद्रोऽथ फाल्गुने ॥ उपेन्द्रश्चैव मासे च वैशाखे विघ्ननाशनः ॥ ज्येष्ठे शिवसुतः पूज्य आषाढे हरनंदनः ॥ श्रावणे विघ्नराजस्तु भाद्रेऽथो मोदकप्रियः ॥ आश्विने कार्तिके मासि महावीरश्च मार्गके ॥ विघ्नहर्ताधिके मासि एवं पूज्यो गणेश्वरः ॥ गंधपुष्पैस्तथा धूपैः कर्पूरैर्यक्षकर्दमैः ॥ मृगाणां कुंकुमैः शुभ्रैः सिंदूरेण विशेषतः ॥ रक्तोत्पलदलैः पूज्यो बिल्वपत्रेण केशरैः ॥ मालतीकेतकीपुष्पैर्हेमपुष्पैर्विचक्षणः॥ अर्घ्यपाद्यैश्च धूपैश्च रक्तवस्त्रेण छादयेत् ॥ पूजा कुर्यात्तु देवस्य दद्यान्मोदकभोजनम् ॥ नमो मूषकमारूढ शुभकर्त्रेऽथ ते नमः ॥ नमः कात्यायनीपुत्र लंबकर्णाय वै नमः ॥ उद्यद्रविस्वरूपाय विद्याबुद्धिविचक्षण ॥ देहि मे पुत्रसौभाग्यं देहि मे सुखसंपदम् ॥ वांछासिद्धिं च मे देहि विद्यां देहि यशो धनम् ॥ शत्रवो नाशमायांतु दुर्जनो नाशमाप्नुयात् ॥ स्वानां चैव हितार्थाय प्रार्थयित्वा गणेश्वरम् ॥ आदौ पूज्य गणेशं तु शांतिपाठमथाचरेत् ॥ नाशयेत्सर्वविघ्नानि कल्याणं जायते सदा ॥ कृष्णेन भाषितं पूर्वं देवतानां हितार्थिना ॥ उत्पाते विघ्नसंभूतौ पूजयेद्गणनायकम् ॥ ॐ आवो देवा इति मंत्रेणावाहयेत् ॥ ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं यज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽ इहमादयंतामों प्रतिष्ठ ॥ १ ॥ एष वै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजंते सर्वमेव प्रतिष्ठितं भवति ॥ इत्यावाहनम् ॥ ॐनमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नमोविरूपेभ्योविश्वरूपेभ्यश्ववोनमः ॥ इति मंत्रेण गणपतये पाद्यं समर्पयामि ॥ अर्घ्यं० आचमनीयं० स्नानं० वस्त्रं० यज्ञोपवीतं० गंधं० अक्षतान्० पुष्पाणि० धूपं० दीपं० नैवेद्यं० तांबूलं० पूगीफलं० दक्षिणां० सिंदूरं० अबीरं० ऋतुफलं० करोद्वर्तनं० पुष्पांजलिं० कृतेनानेन पूजनेन वास्तुप्रवेशाख्ययागनिर्विघ्नतासिद्धये श्रीगणपतिः प्रीयताम् ॥ अथ कलश स्थापनम् ॥ ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छ पृथिवीन्दृꣳह पृथिवींमाहिꣳसीः ॥ इति मंत्रेण गंधादिभिः पृथ्वीमभिपूज्य हस्तेन स्पर्शं कुर्यात् ॥ मानस्तोकेतिगोमयस्पर्शः ॥ ॐमानस्तोकेतनयेमानुआयु षिमानोगोषुमानोअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनावधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ धान्यमसीति मंत्रेण धान्यराशिं कृत्वा ॥ ॐधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवःसविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनांपयासि ॥ ॐआजिघ्रकलशेति मंत्रेण कलशस्थापनं स्पर्शं च कुर्यात् ॥ ॐआजिघ्रकलशं मह्यात्वाविशन्त्विंदवः ॥ पुनरूर्जा निवर्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ ॐवरुणस्योत्तमिति मंत्रेण कलशे जलं पूरयेत् ॥ ॐवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऋतसदन्यसिवरु णस्यऋतसदनमसिवरुणस्य ऋतसदनमासीद ॥ वसोः पवित्रेति वस्त्रं कंठे वेष्टयेत् ॥ ॐवसोः पवित्रमसिशतधारंवसोः पवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ गंधद्वारेति गंधाक्षतान्कलशे





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

निक्षिपेत् ॥ ॐगंधद्वारांदुराधुर्षां नित्यपुष्टां करीषिणींम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ प्राणाय स्वाहेति मंत्रेण कलशे तांबूलं दद्यात् ॥ ॐप्राणायस्वाहाअपानायस्वाहाव्यानायस्वाहा ॥ ॐहिरण्यगर्भेति मंत्रेण कलशे हिरण्यम् ॥ ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यंजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमां कस्मै देवाय हविषाविधेम ॥ परिवाजेति मंत्रेण कलशे पंचरत्नानि दद्यात् " कनकं हीरकं नीलं पद्मरागं च मौक्तिकम् ॥ हीरकं पंच रत्नानि मुनिभिःपूर्वदर्शिभिः " ॐपरिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुष ॥ इति ॥ या ओषधीरिति सर्वौषधीर्निक्षिपेत् ॥ ॐयाऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ॥ मनैनु बभ्रूणामहᳬशतं धामानिसप्तच ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ राजद्वाराद्गोकुलाच्च मृदमानीय यत्नतः ॥ स्योनापृथिवीति मंत्रेण कलशे निक्षिपेत् ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ धान्यमसीति मंत्रेण कलशे सप्तधान्यानि क्षिपेत् ॥ ॐधान्यमसि धिनुहि देवान्प्राणायत्वोदानायत्वा व्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवः सविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ कांडात्कांडादिति दूर्वा निक्षिपेत् ॥ ॐकांडात्कांडात्प्ररोहंती परुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ॐअंबेअंबिकेइति मंत्रेण कलशे पंचपल्लवान्दद्यात् ॥ ॐअंबे अंबिकेऽम्बालिके न मानयतिकश्चन ॥ स संस्त्यश्वकः सुभद्रिकां कांपीलवासिनीम् ॥ ॐपवित्रे स्थ इति मंत्रेण पवित्राणि कलशे दद्यात् ॥ ॐपवित्रे स्थो वैष्णव्यौ सवितुर्वः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



प्रसुवऽउत्पुंनाम्यच्छिद्रेणपवित्रेण सूर्यस्य रश्मिभिः ॥ तस्यते पवित्रपते पवित्रपूतस्य यत्कामः पुंने तच्छकेयम् ॥ पूर्णादर्वी
ति कलशोपरि तंडुलपूर्णपात्रं स्थापयेत् ॥ ॐ पूर्णादर्विपरापतसुपूर्णा पुनरापंत ॥ वस्नेवविक्रीणावहाइषमूर्जंᳲशतक्रतो ॥
श्रीश्चते इति मंत्रेण कलशे श्रीफलं निधाय ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौव्यात्तम् ॥ इष्णान्नि
षाणामुम्मंइषाण सर्वलोकम्मंइषाण ॥ पुष्पमालां च कंठे वेष्टयेत् ॥ अग्निर्ज्योतिरिति मंत्रेण कलशसमीपे पूर्वदिशि एकस्मि
न्पात्रे दीपं दद्यात् ॥ ॐअग्निर्ज्योतिर्ज्योतिरग्निः स्वाहासूर्योज्योतिर्ज्योतिःसूर्यःस्वाहा ॥ अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो
वर्चो ज्योतिर्वर्चःस्वाहा ॥ ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ इति स्थापितकलशस्वरूपम् ॥ मनोजूतिरिति प्रतिष्ठा ॥
ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टंयज्ञंᳲसमिमंदधातु । विश्वेदेवासऽइहमादयन्तामोंप्रतिष्ठ ॥
तत्र गणानां त्वेति मंत्रेण गणेशमावाहयेत् ॥ ॐगणानां त्वागणपतिᳲहवामहे प्रियाणां त्वाप्रियपतिᳲहवामहेनिधीनांत्वा
निधिपतिᳲहवामहेव्वसोमम ॥ आहमजानि गर्भधमात्वमजासिगर्भधम् ॥ तत्र कलशे वरुणमावाह्य तत्त्वायामीति
मंत्रेण ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेह बोध्युरुशᳲसमानऽआयुः
प्रमोषीः ॥ ॐभूर्भुवःस्वः गणेशवरुण इहागच्छ इह तिष्ठ ॥ अथ कलशाधिष्ठातृदेवतानामावाहनम् ॥ ॐसरितः सागराः
शैलास्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥१॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ॐकलशाधिष्ठातृदेवताभ्यो नमः इति मंत्रेण गंधाक्षत पुष्पधूपदीपनैवेद्यादिभिः संपूज्य पुष्पांजलिं निवेद्य नतिं कुर्यात् ॥ अथ कलशप्रार्थना ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि तदा कुंभ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ सर्वेऽपि त्वयि तिष्ठंति यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति कलशस्थापनम् ॥ अथ कलशाग्रे पश्चिमदिशि गणेशांबिकयोः पूजनम् ॥ ॐगणानां त्वेति मंत्रेण गणपतिमावाहयामि स्थापयामि पाद्यादिभिः पूजयामि ॥ ॐश्रीश्च ते लक्ष्मीश्चेति मंत्रेण अंबिकामावाहयामि स्थापयामि पाद्यादिभिः पूजयामि ॥ अथ यजमानः श्वेतसर्षपतंडुलपूर्णपुटके रक्षासूत्रं सफलदक्षिणाकंकणयुक्तं गृहीत्वा वक्ष्यमाणमंत्रान्पठित्वा सर्षपाक्षतैर्दिग्रक्षां कुर्यात् ॥ भविष्योत्तरपुराणे०—"दूर्वा यवांकुराश्चैव बालकं नूतनपल्लवाः ॥ हरिद्राद्वयसिद्धार्थाः शिखिपक्षोरगत्वचः ॥ कंकणौषधयश्चैताः कौतुकाख्या नव स्मृताः ॥" एतन्नवद्रव्ययुतपट्टवस्त्रखंडेन यजमानदक्षिणहस्ते स्त्रियो वामहस्ते रक्षासूत्रपूर्वकयज्ञकङ्कणं बध्नीयात् ॥ तद्यथा ॐगणाधिपं नमस्कृत्य नमस्कृत्य पितामहम् ॥ विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सरस्वतीम् ॥ स्थानाधिपं नमस्कृत्य दिननाथं निशा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



करम् ॥ धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिम् ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम् ॥ राहुं केतुं नमस्कृत्य यज्ञारंभे विशेषतः ॥ शक्राद्या देवताः सर्वा मुनींश्च कथयाम्यहम् ॥ गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् ॥ वशिष्ठं मुनिशार्दूलं विश्वामित्रं महामुनिम् ॥ व्यासं कविं नमस्कृत्य सर्वशास्त्रविशारदम् ॥ सर्वे नमस्कृतास्ते मे यज्ञं रक्षंतु सर्वदा ॥ पूर्वे रक्षतु गोविंद आग्नेय्यां गरुडध्वजः ॥ याम्ये रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥ केशवो वारुण्यां रक्षेद्वायव्यां मधुसूदनः ॥ उत्तरे श्रीधरो रक्षेदीशाने च गदाधरः ॥ ऊर्द्ध्वं गोवर्द्धनो रक्षेदधस्तात्तु त्रिविक्रमः ॥ एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ यज्ञाग्रे पातु मां शंखः पृष्ठे पद्मं तु रक्षतु ॥ वामपार्श्वं गदा रक्षेद्दक्षिणं च सुदर्शनः ॥ उपेंद्रः पातु ब्रह्माणमाचार्यं पातु वामनः ॥ अच्युतः पातु ऋग्वेदं यजुर्वेदमधोक्षजः ॥ कृष्णो रक्षतु सामाख्यमथर्वाणं तु माधवः ॥ विप्रा ये चोपदेष्टारस्तांश्च दामोदरोऽवतु ॥ वेदमंत्रैश्च कर्त्तव्या रक्षा शुभ्रैश्च सर्षपैः ॥ रक्षोहणादिभिर्मंत्रैः सूक्तं रक्षोहणं पठेत् ॥ इति गणपतये रक्षासूत्रं वरुणकलशाधिष्ठातृदेवतारक्षासूत्रं दत्त्वा ततो रक्षासूत्रफलपुष्पदक्षिणासनयज्ञोपवीतकमंडलुवस्त्रादिभिराचार्यादीन्वृणुयात् ॥ यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे ॥ तत्फलं पांडवश्रेष्ठ विप्राणां पादधावने ॥ अनेनाचार्यादीनां पादप्रक्षालनं कृत्वा आसनेषूपवेशयेत् ॥ पूर्वोच्चारितैवंगुणविशेषणविशिष्टायां शुभ-पुण्यतिथौ अमुकनक्षत्रयोगकरणमुहूर्तवर्तमानायाममुकगोत्रोऽमुकनामा करिष्यमाणनूतनगृहप्रवेशकर्मकरणार्थममुकगोत्रममुकप्रवरममुकवेदांतर्गतामुकशाखाध्यायिनममुकशर्माणं ब्राह्मणमेभिः पूगीफलाक्षतद्रव्यचंदनयज्ञोपवीतवासोभिराचार्यत्वेन त्वामहं वृणे ॥ वृतोऽस्मीति प्रतिवचनम् ॥ ॐव्रतेन



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ अनेनाचार्यादिहस्ते रक्षासूत्रं बद्ध्वा ॥ ॐयुंजंति ब्रध्नमिति मंत्रेण तिलकम् ॥ ॐयुञ्जन्तिब्रध्नमंरुषञ्चरन्तम्परितस्थुषः ॥ रोचन्तेरोचनादिवि ॥ १ ॥ युंजंत्यस्यकाम्या हरीविपक्षसारथे ॥ शोणाधृष्णूनृवाहसा ॥ २ ॥ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ इति प्रार्थ्य नतिं कुर्यात् ॥ ॐतत्सदिति॰ अमुकगोत्रोमुकप्रवरोऽमुकशर्मा नूतनगृहप्रवेशाख्यकर्मणि कृमिकीटपतंगादिजीवहिंसादोषनिवृत्तिपूर्वकन्यूनाधिकसंरक्षणार्थममुकगोत्रामुकप्रवरामुकनामानममुकवेदशाखाध्यायिनं ब्राह्मणमेभिः पूगीफलाक्षतद्रव्यचंदनयज्ञोपवीतवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ वृतोस्मीति प्रतिवचनम् ॥ रक्षातिलकादिभिः संपूज्य ॥ यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः॥ तथा त्वं मम यज्ञेस्मिन्ब्रह्मा भव द्विजोत्तम ॥ इति संप्रार्थ्य नतिं कुर्यात् ॥ देशकालौ संकीर्त्य अमुकगोत्रामुकप्रवरोऽमुकनामा नूतनगृहप्रवेशाख्यशांतिकर्मांगभूततत्कर्मकरणार्थममुकगोत्रानमुकप्रवरामुकवेदांतर्गतामुकशाखाध्यायिनोमुकामुकशर्मणो विप्रानृत्विक्त्वेन युष्मानहं वृणे ॥ वृताः स्म इति प्रतिवचनम् ॥ ततो रक्षातिलकमालापुष्पादिभिः पूजयेत् ॥ ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक्त्वं मे मखे भव ॥ एवमध्वर्युं होतारं सदस्यमुपद्रष्टारं च वृणुयात् ॥ ततो यजमानस्य सपरिवारस्य रक्षातिलकम् ॥ येन बद्धो बली राजा दानवेंद्रो महाबलः ॥ तेन त्वामनुबध्नामि रक्षे मा चल मा चल ॥ इत्यनेन मंत्रेण यजमानदक्षिणहस्ते रक्षाबंधनं स्त्रियास्तु वामकरे रक्षाबंधनम् ॥ ततस्तिलकम ॥ ॐ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥ धान्यं धनं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ १ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ तिलकं ते प्रयच्छंतु सर्वकामार्थसिद्धये ॥ २ ॥ इति सपरिवारस्य यजमानस्य तिलकम् ॥ ॐ मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भव एताः सत्या आशिषः संतु इति विप्रा आशीर्वादं दद्युः ॥ एवं गंधमाल्यादिभिर्ब्राह्मणान्संपूज्य स्वयं स्वलंकृतः पुण्याहवाचनं कुर्यात् ॥ अथ पुण्याहवाचनम् ॥ अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुः प्रमाणेन पुण्याहं दीर्घमायुरस्तु॥ अपां मध्ये स्थिता देवाः सर्वे चाप्सु प्रकीर्तिताः ॥ ब्राह्मणानां करे न्यस्ताः शिवा आपो भवंतु ते ॥ शिवा आपः संतु ॥ लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ॥ सा मे वसतु वै नित्यं सौमनस्यं तथास्तु नः ॥ सौमनस्यमस्तु ॥ अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् ॥ यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥ अक्षतं चारिष्टं चास्तु॥ ब्राह्मणानां हस्ते गंधादि ॥ गंधः प्रदेयो देवानामपत्यपुष्टिदश्च नः ॥ गंधद्वारां दुराधर्षामिति मंत्रेण भक्तितः ॥ १ ॥ गंधाः पांतु सौमंगल्यं चास्तु अक्षताः पांतु आयुष्यमस्तु पुष्पाणि पांतु सौश्रेयसमस्तु तांबूलानि पांतु ऐश्वर्यमस्तु दक्षिणाः पांतु आरोग्यमस्तु दीर्घमायुः श्रेयः शांतिः पुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चारोग्यं चायुष्यमस्तु ॥ यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाः शोभनाः प्रवर्त्तंते तमहमोंकारमादिं कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहवृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये इति यजमानो ब्रूयात् ॥ वाच्यतामिति ब्राह्मणवचनम् ॥ ऋक् ॥ द्रविणो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दाद्रविणसस्तुरस्यंद्रविणोदाः सर्नरस्युप्रयंसत् ॥ द्रविणोदावीरवंतीमिषंन्नोद्रविणोदारासते दीर्घमायुः ॥ १ ॥ यजुः ॥ द्रवि
णोदाः पिंपीषति जुहोतप्रचतिष्ठत ॥ नेष्ट्राहतुभिरिष्यत ॥ २ ॥ ऋक् ॥ सवितापश्चात्तात्सवितापुरस्तात्सवितोत्तराता
त्सविताधरात्तात् ॥ सवितानः सुवतुसर्वतातिं सवितानोरासतां दीर्घमायुः ॥ १ ॥ यजुः ॥ सवितात्वांसुवानांᳬसुवतामु
ग्निर्गृहपतीनाᳬसोमोवनस्पतीनाम् ॥ बृहस्पतिर्वाचइंद्रो ज्यैष्ठ्यायरुद्रः पशुभ्योमित्रः सत्योवरुणोधर्मपतीनाम् ॥ २ ॥
ऋक् ॥ ॐनवोनवोभवतिजायमानोऽह्नां केतुरुषसामेत्यग्रम् ॥ भागं देवेभ्योविदधात्यायन्प्रचंद्रमास्तिरते दीर्घमायुः ॥
॥ १ ॥ यजुः ॥ ॐनतद्रक्षांᳬसिनपिशाचास्तरंति देवानामोजः प्रथमजᳬह्येतत् ॥ योबिभर्ति दाक्षायणᳬहिरण्यᳬस
देवेषु कृणुतेदीर्घमायुः समनुष्येषु कृणुतेदीर्घमायुः ॥ २ ॥ ऋक् ॥ ॐ उच्चादिविदक्षिणावंतो अस्थुर्येऽअश्वदाःसहते सूर्येण ॥
हिरण्यदा अमृतत्वं भजंते वासोदाःसोमप्रतिरंत आयुः ॥ १ ॥ यजुः ॥ उच्चातेजातमंधसोदिविसद्भूम्याददे ॥ उग्रᳬ
शर्म्ममहिश्रवः ॥ २ ॥ इत्येता ऋचः पुण्याहे ब्रूयात् ॥ व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः
समाधीयतामिति यजमानवचनम् ॥ समाहितमनसः स्म इति ब्राह्मणा ब्रूयुः ॥ प्रसीदंतु भवंतः इति यजमानो वदेत् ॥ २ ॥
प्रसन्नाः स्मः इति ब्राह्मणा ब्रूयुः ॥ अथपूर्वस्थापितकलशात्ताम्रपात्रे जलमादाय यजमानमूर्धनि दूर्वया सेचनं कुर्यात् ॥ शांति
रस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । ऋद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवमस्तु । शिवंक

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



र्मास्तु । कर्मसमृद्धिरस्तु । धर्मसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । पुत्रपौत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । ( भूमौ वा पात्रांतरे ) अनिष्टनिरसनमस्तु । यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु । ( पात्रे ) यच्छ्रेय स्तत्तदस्तु । उत्तरे कर्मणि निर्विघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने सदैवते प्रीयेताम् । दुर्गापांचाल्यौ प्रीयेताम् । अग्निपुरोगा विश्वेदेवाः प्रीयंताम् । इन्द्रपुरोगा मरुद्गणाः प्रीयंताम् ॥ वसिष्ठपुरोगा ऋषिगणाः प्रीयंताम् । माहेश्वरीपुरोगा उमामातरः प्रीयंताम् । अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंताम् । आदित्यपुरोगाः सर्वे ग्रहाः प्रीयंताम् । ब्रह्म च ब्राह्मणाश्च प्रीयंताम् । अंबिकासरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती सिद्धिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवंतौ विघ्नविनायकौ प्रीयेताम् । सर्वाः कुलदेवताः प्रीयंताम् । सर्वा ग्रामदेवताः प्रीयंताम् । सर्वा इष्टदेवताः प्रीयंताम् । ( भूमौ ) हताश्च ब्रह्मद्विषः हताश्च परिपंथिनः हताश्च विघ्नकर्तारः शत्रवः पराभवं यांतु । शाम्यंतु घोराणि । शाम्यंतु पापानि । शाम्यंत्वीतयः । ( पात्रे ) शुभानि वर्द्धंताम् । शिवा आपः संतु । शिवा ऋतवः संतु । शिवा अग्नयः संतु । शिवा आहुतयः संतु । शिवा ओषधयः संतु । शिवा वनस्पतयः संतु । शिवा अतिथयः संतु ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अहोरात्रे शिवे स्याताम् ॥ ऋक् ॥ ॐशं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ फलवत्योनओषधयः पच्यंतां योगक्षेमोनः कल्पताम् ॥ २ ॥ पूर्णपात्रे जलं क्षिपेत् ॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयंताम् । भगवान्नारायणः प्रीयताम् । भगवान्स्वामी महासेनः प्रीयताम् । पुरोनुवाक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः सूर्योदये यत्पुण्यं तदस्तु । एतत्कल्याणयुक्तं पुण्यमस्तु ॥ ततो यजमानः सुवर्णकलशं भूमौ निधाय प्रथमपात्रपातितजलेन शिरः संमृज्य सपरिवारगृहं चाभिषेचयेत् ॥ द्वितीयपात्रपातितजलमेकांते च पातयेत् ॥ पुण्याहकालान्वाचयिष्ये इति यजमानो ब्रूयात् ॥ वाच्यतामिति ब्राह्मणा ब्रूयुः ॥ ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मम सहकुटुंबस्य सपरिवारस्य गृहे वास्तुप्रवेशाख्यकर्मणि पुण्याहं भवंतो ब्रुवंतु ३ ॥ ब्राह्मणाः—पुण्याहम् ३ ॥ ऋक् ॥ ॐउद्गातेवं शकुने सामगायसि ब्रह्मपुत्र इव सवनेषु शंससि ॥ वृषेववाजी शिशुमतीरपीत्या सर्वतोनः शकुने भद्रमावद विश्वतोनःशकुने पुण्यमावद ॥ यजुः ॥ ॐपुनंतुमा देवजनाःपुनंतुमनसाधियः ॥ पुनंतुविश्वाभतानिजातवेदः पुनीहिमा ॥ २ ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणं ब्रुवंतु नः ॥ भो ब्राह्मणाः मम सकुटुंबस्य सपरिवारस्य नूतनवास्तुप्रवेशाख्यकर्मणि कल्याणं भवंतो ब्रुवंतु ३ ॥ ॐकल्याणम् ॥ ऋक् ॥ ॐअपाः सोममस्तमिंद्र प्रयाहि कल्याणीर्जायासुरणं गृहे ते ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ १ ॥ यजुः ॥ ॐयथेमांवाचंकल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्या शूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदेवानां दक्षिणायैदातुरिहभूयासमयं मेकामः समृद्ध्यतामुपमादो नमतु ॥ २ ॥ सागरस्य तु या ऋद्धिर्महालक्ष्यादिभिः कृता ॥ संपूर्णा सुप्रभावा च तां तामृद्धिं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मम सकुटुंबस्य सपरिवारस्य नूतनहर्म्यप्रवेशकर्मणि गृहे ऋद्धिं भवंतो ब्रुवंतु ३ ॥ ॐऋद्ध्यताम् ॥ ऋक् ॥ ॐऋद्ध्यामस्तोमं सनुयामवाजमानो मंत्रं सुरथेहोपयातम् ॥ यशोन पक्वं मधुगोष्वंतरा भूतांशोंअश्विनोः काममप्राः ॥ १ ॥ यजुः ॥ ॐसुत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृताअभूम ॥ दिवं पृथिव्या अद्ध्यारुहामाविदामदेवान्स्वज्योतिः ॥ २ ॥ स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तांतां स्वस्तिं ब्रुवंतु नः ॥ भो ब्राह्मणाः मम सकुटुंबस्य सपरिवारस्य गृहे स्वस्तिं भवंतो ब्रुवंतु ३ ॥ ॐस्वस्ति ॥ ऋक् ॥ ॐस्वस्तिऋद्धि प्रपथे श्रेष्ठा रेक्णस्वस्त्यभिया वाममेति ॥ सानोअमासोअरणेनिपातुस्वावशोभवतुदेवगोपाः ॥ १ ॥ यजुः ॥ ॐस्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्यों अरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ २ ॥ ॐमृकंडसूनोरायुर्यद्ध्रुवलोमशयोस्तथा ॥ आयुषा तेन संयुक्ता जीवेम शरदः शतम् ॥ १ ॥ जीवंतु भवंतः ॥ ऋक् ॥ ॐशतंजीवशरदोवर्द्धमानः शतंहेमंताच्छतमुवसंतान् ॥ शतमिंद्राग्नीसवितावृहस्पतिःशतायुषाहविषेमंपुनर्दुः ॥ यजुः ॥ ॐशतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनाम् ॥ पुत्रासो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यत्रंपितरोभवंतिमानोमुध्यारीरिषतायुर्गंतोः ॥ २ ॥ शिवगौरीविवाहे या या श्रीरामे नृपात्मजे । धनदस्य गृहे याश्रीरस्माकं सास्तु सद्मनि ॥ १ ॥ भो ब्राह्मणाः मम सकुटुंबस्य सपरिवारस्य वास्तुप्रवेशकर्मणि गृहे श्रीरस्तु इति भवंतो ब्रुवंतु ३ ॥ ॐअस्तु श्रीः ३ ॥ ऋक् ॥ ॐश्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंति सत्यासमिथामितद्रौ ॥ १ ॥ यजुः ॥ ॐमनसःकाममाकूतिंवाचःसत्यमशीय ॥ पशूनाᳯंरूपमन्नस्यरसोयशःश्रीःश्रयतांमयिस्वाहा ॥ २ ॥ प्रजापतिर्लोकपालोधाताब्रह्मासवेदराट् ॥ भगवाञ्छाश्वतोनित्यंसनोरक्षतुसर्वतः ॥ १ ॥ भगवान्प्रजापतिः प्रीयताम् ॥ ऋक् ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् ॥१॥ यजुः ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नो अस्त्वयममुष्यपितासावस्यपितावयᳯंस्यामपतयोरयीणाᳯंस्वाहा ॥ रुद्रयत्तेक्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसिस्वाहा ॥ २ ॥ आयुष्मतेस्वस्तिमतेयजमानायदाशुषे ॥ कृताः सर्वाशिषः संतुऋत्विग्भिर्वेदपारगैः ॥१॥ देवेंद्रस्य यथा स्वस्ति यथा स्वस्ति गुरोर्गृहे ॥ एकलिंगे यथा स्वस्ति तथा स्वस्ति सदा मम ॥२॥ ॐआयुष्मते स्वस्ति ॥३॥ ऋक्॥ ॐस्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयं आदित्यासोभवंतुनः ॥ १ ॥ यजुः ॥ ॐप्रतिपंथामपद्महिस्वस्तिगामनेहसम् ॥ येनविश्वाः परिद्विषोवृणक्तिविंदतेवसु ॥२॥ ऋक् ॥ ॐमहो अग्नेः समिधानस्य शर्मण्यनागामित्रेवरुणे स्वस्तये ॥ श्रेष्ठे स्याम सवितुः सवीमनि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तद्देवानामवो अद्या वृणीमहे ॥ १ ॥ यजुः ॥ ॐविश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुव ॥ मंत्रार्थाः सफलाः संतु पूर्णाः संतु मनोरथाः ॥ शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयोऽस्तु वः ॥ १ ॥ ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ ब्रह्मवक्त्रे स्थिता नित्यं निघ्नंतु तव शात्रवान् ॥ २ ॥ अक्षतान्विप्रहस्तात्तु नित्यं गृह्णंति ये नराः ॥ चत्वारि तेषां वर्धंत आयुः कीर्तिर्यशो बलम् ॥ ३ ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥ धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ १ ॥ इति पुण्याहवाचनम् ॥ ॥ अथ सामान्यतो ग्रहपूजनम् ॥ ॐआवोदेवासऽईमहेवामंप्रयत्यध्वरे ॥ आवोदेवासऽआशिषोयज्ञियासोहवामहे ॥ १ ॥ ॐब्रह्मा मुरारिस्त्रिपुरांतकारिर्भानुः शशी भूमिसुतो बुधश्च ॥ गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शांतिकरा भवंतु ॥ इति सूर्यादिग्रहानावाह्य ॥ मनोजूतीति प्रतिष्ठाप्य ॥ पाद्यादिभिः पूजयेत् ॥ अथ गौर्यादिषोडशमातृकाघृतमातृकापूजनम् ॥ ॐअद्यकर्तव्यवास्तुशांतिकर्मणि मम नूतनगृहे अत्र पूर्वं चांडालादिकृतजीवहिंसादिजन्यप्रत्यवायपरिहारार्थं तथा कृमिकीटपतंगादिहिंसादोषनिवृत्त्यर्थं वृक्षौषध्यादिच्छेदनपूर्वकाभाष्यभाषणादिदोषनिवृत्तिकामः संप्राप्ताभ्युदयिकश्राद्धांगभूतषोडशमातृकाघृतमातृकाऽऽवाहनस्थापनपूजनमहं करिष्ये इति संकल्पः ॥ मातृकास्थापनप्रकारः ॥ पचोर्द्धाः पंच तिर्यक्च रेखाः कार्याः प्रयत्नतः ॥ दशषट्कोष्ठका ज्ञेयाः पूज्या वै मातरः पृथक् ॥ कुलदेवीं गणेशं च गौरीं पद्मासमन्विताम् ॥ पूजयन्मध्यमे कोष्ठे शेषा बाह्ये हि कोष्ठके ॥ मध्यकोष्ठे चतुष्के तु स्थापयेच्च पृथक्पृथक् ॥ गणेशं वायुकोणे च मध्यमे च कुलेश्वरीम् ॥ गौरी च नैर्ऋते पूज्या पद्मा पावकको



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

णके ॥ शची च पश्चिमे स्थाप्या मेधा चैव द्वितीयके ॥ सावित्री दक्षिणे पूज्या विजया च द्वितीयके ॥ जया च उत्तरे स्थाप्या देवसेना द्वितीयके ॥ स्वाहाऽऽग्नेय्यां समभ्यर्च्या ईशान्यां च स्वधा तथा ॥ पूर्वे तु मातरः पूज्यास्तदग्रे लोकमातरः ॥ धृतिः पुष्टिर्वायुकोणे तुष्टिं च नैर्ऋते तथा ॥ एवं हि मातरः स्थाप्याः स्वस्वस्थाने पृथक्पृथक् ॥ हिमाद्रितनयां देवीं वरदां भैरवप्रियाम् ॥ लंबोदरस्य जननीं गौरीमावाहयाम्यहम् ॥ १ ॥ ॐआयंगौः पृश्निरक्रमीदसंदन्मातरंम्पुरः ॥ पितरंचप्प्रयन्त्स्वः ॥ इति मध्यकोष्ठे नैर्ऋत्येकोणे गौरीमावाहयामि स्थापयामि ॥ १ ॥ सुवर्णाभां पद्महस्तां विष्णोर्वक्षस्थले स्थिताम् ॥ त्रैलोक्यपूजितां देवीं पद्मामावाहयाम्यहम् ॥ ॐहिरंण्यरूपाउषसोंव्विरोकऽउभाविंद्राउदिथःसूर्यश्च ॥ आरोहतंवरुणमित्रगर्त्तंततश्चक्षथामदितिंदितिंचमित्रोसिव्वरुणोऽसि ॥२॥ ( मध्यमेकोष्ठे ) पद्मामावाहयामि स्थापयामि ॥२॥ उत्पलाक्षीं सुदर्शनां शचीं कुंडलधारिणीम् ॥ देवराजप्रियां भद्रां शचीमावाहयाम्यहम् ॥ ॐकुदाचुनस्तरीरसिनेंद्रंसश्चसिदाशुषे ॥ उपोपेन्नुमंघवन्भूयऽइन्नुतेदानंदेवस्यंपृच्यते ॥ ३ ॥ ( पश्चिमे ) शचीमावाहयामि स्थापयामि ॥३॥ विवस्वत्करसंफुल्लां सुगंधिपद्मवासिताम् ॥ बुद्धिप्रसादिनीं सौम्यां मेधामावाहयाम्यहम् ॥ ॐमेधांमेवरुणोददातुमेधामग्निःप्रजापतिः ॥ मेधामिंद्रश्चवायुश्चमेधांधातादंदातुमेस्वाहा ॥ ४ ॥ ( पश्चिमे द्वितीयकोष्ठे ) मेधामावाहयामि स्थापयामि ॥ ४ ॥ जगत्स्रष्ट्रींजगद्धात्रीं पक्षिरूपेण संस्थिताम् ॥ ॐकाराक्षीं भगवतीं सावित्रीमावाहयाम्यहम् ॥ ॐतत्संवितुर्व्वरण्यंभर्गोदेवस्यंधीमहि ॥ धियोयोनः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



प्रचोदयात् ॥५॥ ( दक्षिणे ) सावित्रीमावाहयामि स्थापयामि ॥ ५ ॥ दैत्यपक्षक्षयकरीं देवानां चाभयप्रदाम् ॥ गीर्वाणवंदितां देवीं विजयामावाहयाम्यहम् ॥ व्विज्यं धनुः कपर्दिनो व्विशल्ल्यो बाणवाँऽउत ॥ अनेशन्नस्युया ऽइषवऽआभुरस्यनिषङ्गधिः ॥६॥ ( दक्षिणे द्वितीयकोष्ठे ) विजयामाहयामि स्थापयामि॥६॥ विश्वभद्रां जयां रक्तां रक्तांबरधरां सदा ॥ त्रैलोक्यवंदितां देवीं जयामावाहयाम्यहम् ॥ यातें रुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वा शंतमयागिरिशंताभिचाकशीहि ॥ ७ ॥ ( उत्तरे ) जयामावाहयामि स्थापयामि ॥ ७ ॥ मयूरवाहनारूढां शक्तिखड्गधनुर्धराम् ॥ आवाहयेद्देवसेनां तारकासुरमर्दिनीम् ॥ ॐदेवानां भुद्रासुमतिर्ऋजूयतांदेवानांᳯंरातिरभिनोनिवर्तताम् ॥ देवानाᳯंसख्यमुपसेदिमाव्वयंदेवानुऽआयुःप्रतिरंतुजीवसे ॥ ८ ॥ ( उत्तरे ) देवसेनामावाहयामि स्थापयामि ॥ ८ ॥ कव्यमादाय सततं पितृभ्यो या प्रयच्छति ॥ पितृलोकार्चितां देवीं स्वधामावाहयाम्यहम् ॥ ॐपितृभ्यंःस्वधायिभ्यःस्वधानमः पितामहेभ्यंःस्वधायिभ्यंःस्वधानमःप्रपितामहेभ्यःस्वधायिभ्यंः स्वधानमः ॥ अक्षन्पितरोऽमीमदंतपितरोऽतीतृपंतपितरः पितरः शुंधद्ध्वम् ॥९॥ स्वधामावाहयामि स्थापयामि ॥९॥ हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति ॥ स्वर्गलोकार्चिते स्वाहे समागच्छ ममाध्वरे ॥ ॐस्वाहा यज्ञं मनसः स्वाहोरोरंतरिक्षात्स्वाहा द्यावापृथिवीभ्याᳯंस्वाहा व्वातादारंभेस्वाहा ॥ १० ॥ ( आग्नेये ) स्वाहामावाहयामि स्थापयामि ॥ १० ॥ भूतग्राममिमं कृत्स्नं यया उत्पादितं पुरा ॥ त्रैलोक्यपूजितां देवीं मातरमावाहयाम्यहम् ॥ ॐ आपोऽअस्मान्मातरः शुंधयंतु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

घृतेनंनो घृतुप्वंः पुनंतु ॥ विश्वुᳬंहिरिप्प्रंप्रवहंति देवीरुदिदांभ्यः शुचिरापूतऽएंमि ॥ ॐदीक्षातपसोस्तनूरसि तां त्वा शिवाᳬंशग्मां परिदधे भद्रं वर्णं पुष्यन् ॥ ११ ॥ ( पूर्वे ) मातरमावाहयामि स्थापयामि ॥ ११ ॥ आवाहयेल्लोकमातरं जगत्पालनसंस्थिताम् ॥ शक्राद्यैर्वंदितां देवीं तत्रत्यैश्च सुरैरपि ॥ ॐभवं तन्नः समनसौ सचेतसावरेप्पसौमायुज्ञᳬंहिᳬंसिष्टं मा युज्ञपंतिं जातवेदसौशिवौ भंवतमुद्यनंः ॥ १२ ॥ ( पूर्वेतदग्रे ) लोकमातरमावाहयामि स्थापयामि ॥ १२ ॥ नमस्तुष्टिकरीं देवीं लोकानुग्रहकारिणीम् ॥ सर्वकामसमृद्ध्यर्थं धृतिमावाहयाम्यहम् ॥ ॐयत्प्रज्ञानंमुतचेतोधृतिश्चयज्ज्योतिरंतरमृतं प्रजासु ॥ यस्मान्नऽऋतेकिंचुनकर्मंक्रियतेतन्मेमनः शिवसंकल्पमस्तु ॥ १३ ॥ ( वायव्ये ) धृतिमावाहयामि स्थापयामि ॥ १३ ॥ प्रणता या हि लोकेऽस्मिन्पुत्रपुष्टिसुखप्रदा ॥ भक्तेभ्यश्चापि वरदा विद्युज्ज्वालार्ककुंडला ॥ ॐतत्त्वायामिब्रह्मणा वंदमानस्तदाशास्ते यजंमानोहविर्भिः ॥ अहेडमानोव्वरुणो हब्रोध्युरुशᳬंसुमानऽआयुःप्रमोषीः ॥ १४ ॥ ( वायव्ये ) पुष्टिमावाहयामि स्था० ॥ १४ ॥ आवाहयामि तां तुष्टिं सर्वलोकेषु पूजिताम् ॥ संतोषभावनादीनां रक्षणायाध्वरे मम ॥ ॐबृहस्पते परिदीयारथेनरक्षोहा मित्राँ२ऽअपबाधंमानः ॥ प्रभंजन्त्सेनांः प्रमृणो युधाजयंन्नस्माकंमेध्यविताारथांनाम् ॥ १५ ॥ ( नैर्ऋत्ये ) तुष्टिमावाहयामि स्था० ॥ १५ ॥ तामात्मादिहितां देवीं सर्वकामफलप्रदाम् ॥ वंशरक्षाकरीं गोत्रींदेवीमावाहयाम्यहम् ॥ ॐप्राणायस्वाहा अपानायस्वाहा व्यानायस्वाहा ॥ अम्बेऽअम्बिकेम्बालिकेनमांनयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्का

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ग्पीलवासिनीम् ॥ १६ ॥ ( मध्यमे कोष्ठे ) आत्मकुलदेवीमावा० स्थाप० ॥ १६ ॥ मनोजूतीति प्रतिष्ठा ॥ गणपतिसहित गौर्यादिषोडशमातृभ्यो नमः पाद्यार्घमाचमनीयस्नानं वस्त्रं गंधं पुष्पं धूपं दीपं नैवेद्यं तांबूलं पूगीफलं दक्षिणाद्रव्यम् अबीरं सिंदूरम् आरार्तिकं पुष्पांजलिम् ऋतुफलं च समर्पयेत् ॥ कृतेनानेन पूजनेन गौर्यादिषोडशमातरः प्रीणंतु पूजिता वरदा भवंतु ॥ एवं गोधूमपुंजेषु वा रक्ततंडुलपुंजेषु मातृकाः संपूजयेत् ॥ तद्यथा ॥ ब्राह्मी १ माहेश्वरी २ चैव कौमारी ३ वैष्णवी ४ तथा ॥ वाराही ५ च तथेंद्राणी ६ चामुंडाः ७ सप्तमातरः ॥१॥ मनोजूतीति प्रतिष्ठाप्य ॥ पाद्यादिभिः संपूज्य नतिं कुर्यात् ॥ अथ घृतमातृकापूजनम् ॥ कुड्मलाग्रा वसोर्द्धाराः पंचधारा घृतेन तु ॥ कारयेत्सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥ १ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा सिद्धिः प्रज्ञा सरस्वती ॥ मांगल्येषु प्रपूज्याश्च सप्तैता घृतमातरः ॥ १ ॥ ॐवसोःपवित्रमसिशतधारं वसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासविता पुनातुवसोः पवित्रणशतधारेणसुप्वाकामधुक्षः ॥ १ ॥ अनेन मंत्रेण भित्तौ रक्त दोरकोपरि उत्तरोत्तरक्रमेण सप्त घृतधारा दद्यात् ॥ ॐभूर्भुवःस्वः घृतमातृका आवाहयामि मनोजूतिरिति प्रतिष्ठापयामि ॥ आवाहनादिपंचोपचारैः संपूज्य अनया पूजया सर्वा मातरः प्रीयंताम् ॥ ततो नीराजनं पुष्पांजलिं नतिं च कुर्यात् ॥ अथाभ्युदयिकश्राद्धप्रयोगः ॥ तत्र दक्षिणोत्तरक्रमेण द्वादशस्थानेषु प्रत्येकमासादितद्रव्यं ज्वलितप्रदीपं च स्थापयेत् ॥ आचम्य देशकालौ संकीर्त्य प्राङ्मुख उदङ्मुखो वोपविशेत् ॥ सव्येन सर्वं कर्म कर्तव्यम् ॥ ऋजव एव कुशाः तिलकार्ये यवाः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

कर्त्तव्याः ॥ ततः ॥ ॐअपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यंतरःशुचिः ॥ ॐपुंड रीकाक्षः पुनातु इति श्राद्धीयद्रव्याणि सिंचेत्कुशोदकेन ॥ ततः कुशयवजलान्यादाय संकल्पं कुर्यात् ॥ पूर्वोच्चरितैवंगुण विशेषणविशिष्टायां शुभतिथौ अद्यकर्तव्यवास्तुशांत्याख्यकर्मणि शिख्यादिदेवताप्रीतये अद्यामुकगोत्राणां मातृपितामही प्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनां तथामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां नांदीमुखानां तथामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां नांदीमुखानामाभ्युदयिकश्राद्धमहं करिष्ये इति संकल्पयेत् ॥ ततो गायत्रीं त्रिर्जपित्वा ॥ ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वाहायै स्वधायै नित्य मेव नमोनमः ॥ इति त्रिर्जपेत् ॥ ततः ॐअद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीना माभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः इति कुशत्रयरूपं सयवमासनं दक्षिणत आरभ्य उत्सृजेत् ॥ एवं यथोत्तरम् ॥ ॐअद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां नांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः ॥ ॐअद्यामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां नांदीमुखाभ्यु दयिकश्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः ॥ ॐअद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्ध इद मासनंतेनमः ॥ एवं पितामहीप्रपितामहीभ्यामासनं दद्यात् ॥ ॐअद्यामुकगोत्रपितरमुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धे इद मासनं ते नमः ॥ एवं पितामहप्रपितामहयोरपि ॥ ॐअद्यामुकगोत्रमातामहामुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धे इदमासनं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





ते नमः ॥ एवं प्रमातामहवृद्धप्रमातामहयोरपि ॥ ततः आवाहनम् ॥ ॐविश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॥ ॐविश्वे देवासुआगंतश्शृणुतामंऽइमठंहवम् ॥ एदं बुर्हिर्निषींदत ॥ उुपयामगृंहीतोसिुविश्वेंभ्यस्त्वादेवेभ्यऽएषतें योनिुर्विश्वेंभ्यस्त्वा देवे भ्यंः ॥ इत्यावाह्य ॥ ॐ यवोंसियुवयास्मद्वेषों युवयारांतीर्दिवेत्वान्तरिंक्षायत्वापृथिव्यैत्वाशुन्धन्तां लोकाःपितृषदंनाःपितृषदंन मसि॥इति देवपात्रे यवान्विकीर्य ॥ ॐविश्वेंदेवासुऽआगंतश्शृणुतामंइमठंहवंम्॥एदंबुर्हिर्निषींदत॥उुपयामगृंहीतोसिु विश्वेंभ्यस्त्वा देवेभ्यऽ एषतेयोनिर्विश्वेंभ्यस्त्वादेवभ्यंः ॥ ७ ॥ ३४ ॥ ॐविश्वेंदेवाःशृणुतेमंहवं मेयेऽअुंतरिंक्षेयऽउपद्यविष्ठ ॥ येऽअंग्निजिह्वाऽउुत वायजंत्राऽअुासद्यास्मिन्बुर्हिषिमादयध्वम् ॥ आगच्छंतु महाभागा विश्वेदेवा महाबलाः ॥ ये अत्र योजिताः श्राद्धे साव धाना भवंतु ते ॥ इति पठेत् ॥ ॐनांदीमुखान्पितॄनहमावाहयिष्ये इत्युक्त्वा ॥ ॐउुशंतस्त्वानिधींमह्युशन्तः समिंधीमहि ॥ उुशन्नुंशुतऽआवंहपितॄन्हुविषे अत्तंवे ॥ इति पितॄनावाह्य ॥ ॐअपंहताऽ असुंरा रक्षांठंसिवेदिषदंः ॥ इति मात्रादिपात्रे यवा न्विकीर्य ॥ ॐआयंतुनःपितरंःसोम्यासोंऽग्निष्वात्ताःपुथिभिर्देवयानैंः ॥ अुस्मिन्युज्ञे स्वुधयामदंतोऽधिब्रुवंतुुतेऽवन्त्वुस्मान् ॥ इति पठित्वा ततोऽर्घ्यकरणम् ॥ तत्र देवपूर्वकं सर्वेष्वर्घपात्रेषु पवित्राणि धृत्वा ॥ ॐशन्नोंदेवीरभिष्टंय आपोंभवंतु पीतयें ॥ शंय्योरभिस्रंवंतु नः ॥ इति देवार्घपात्रे जलं क्षिपेत् ॥ ततो देवार्घ्यपात्रेषु ॥ ॐयवोंसि युवयास्मद्वेषोंयुवयारांतीर्दिवेत्वान्त रिंक्षायत्वापृथिव्यैत्वाशुंधन्तांलोकाःपितृषदंनाःपितृषदंनमसि ॥ मात्रादिपात्रेषु ॥ ॐयवोसि सोमदैवत्यो गोसवे देवनिर्मितः ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

प्रत्नवद्भिः प्रत्तः पुष्ट्यानान्दीमुखाँल्लोकान्प्रीणाहि नः स्वाहेति मंत्रेण यवान्क्षिपेत् ॥ ततः प्रत्येकं गंधपुष्पे तूष्णीं क्षिपेत् ॥ ततः प्रथमं देवपात्रं वामहस्ते कृत्वा तत्रस्थं पवित्रं भोजनपात्रे निधाय तदुपरि किंचिदुदकांतरं दत्त्वा ॥ ॐयादिव्याऽआपः पयसा संबभुवुर्याऽअंतरिक्षाऽउत पार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता नऽ आपः शिवाः शᳪंस्योनाः सुहवा भवंत्विति पठित्वा कुशत्र यवजलान्यादाय ॐअद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एष वो हस्तार्घो नमः ॥ एवमेव पित्रादिश्राद्धदेवेभ्यो मातामहादिदेवेभ्यश्च अर्घ्यं दद्यात् ॥ ततो मातुरर्घमादाय पूर्ववत् कृत्वा ॐया दिव्या इत्यादि पठित्वा कुशादीन्यादाय ॥ ॐअद्यामुकगोत्रे मातरमुकीदेवि नांदीमुखि आभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः ॥ एवं पितामहीप्रपितामह्योरपि दद्यात् ॥ ततः पित्राद्यर्घपात्रमादाय सर्वं पूर्ववत्कृत्वा कुशादीन्यादाय ॥ ॐअद्यामुकगोत्रपितरमुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः ॥ एवमेव पितामहादिपंचभ्यो हस्तार्घं दद्यात् ॥ ततोऽवशिष्टजलपवित्रयुतं प्रथमं देवार्घमात्रमादाय ॐविश्वेभ्यो देवेभ्यः स्थानमसीति देवासनदक्षिणभागे उत्तानं स्थापयेत् ॥ एवमपरदेवार्घपात्रद्वयं तत्तदासनदक्षिणभागे उत्तानं स्थापयेत् ॥ ततः पितामहीप्रपितामह्यर्घपात्रद्वयस्थितं पवित्रादि मात्रर्घपात्रे निधाय मात्रर्घपात्रं पितामह्यर्घपात्रोपरि तत्पात्रं प्रपितामह्यर्घपात्रोपरि धृत्वा दक्षिणकरेणादाय ॐमातृभ्यः स्थानमसीति मात्रासनवामभागे न्युब्जीकुर्यात् ॥ एवमेव पित्राद्यर्घपात्राणां मेलनं कृत्वा पित्रासनवामभागे ॐपितृभ्यः स्थानमसीति अर्घपात्राणि न्युब्जीकुर्यात् ॥ एवमेव मातामहार्घपात्राणां मेलनं कृत्वा मातामहासनवा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



मभागे ॐमातामहप्रमातामहवृद्ध प्रमातामहेभ्यः स्थानमसीति न्युब्जीकुर्यात् ॥ ततो गंधादिदानम् ॥ तत्र क्रमः—ॐअद्यामुक गोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि वो नमः ॥ एवमेव पित्रादिदेवेभ्यो मातामहादिदेवेभ्यश्च दद्यात् ॥ ॐअद्यामुकगोत्रे मातरमुकीदेवि नांदीमुखि आभ्युदयिकश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलसिंदूरवासांसि ते नमः ॥ एवं पितामहीप्रपितामहीभ्यां गंधादिदानम् ॥ ततः ॐअद्यामुकगोत्रपितरमुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते नमः ॥ एवं पितामहादिपंचभ्योऽपि गंधादिदानम् ॥ ततो जलेन सर्वासनानि भोजनपात्रसहितानि चतुष्कोणमंडलेन वेष्टयेत् ॥ ततः सजलपुटकादौ हस्तेनैव सघृतमन्नम् ॥ ॐअग्नये कव्यवाहनाय स्वाहा ॥ ॐसोमाय पितृमते स्वाहा ॥ इत्याहुतिद्वयं जुहुयात् ॥ ततोऽपसव्यं कृत्वा दक्षिणामुखः पातितवामजानुर्मोटकतिलजलान्यादाय ॥ ॐइदमन्नमेतद्भूस्वामिपितृभ्यो नमः ॥ इति भूस्वामिने किंचिदन्नं दद्यात् ॥ ततः सव्यं कृत्वा प्राङ्मुखो वा हुतशेषमन्नं देवपूर्वकपात्रेषु किंचिद्दत्वा पिंडार्थं किंचिदवशेषयेत् ॥ ततोऽन्यदन्नं यथासंभवं सर्वत्र परिविष्य घृतं जलं तत्रोपनीय पात्रमालभेत् ॥ तत्र क्रमः ॥ उत्तानपाणिभ्यां देवपात्रं स्पृष्ट्वा ॐपृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥ इति पठित्वा ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्यपाᳬसुरे स्वाहा ॥ कृष्ण हव्यमिदं रक्ष मदीयम् ॥ इति पठित्वा ॐइदमन्नमित्यन्ने इमा आपः इति जले ॐइदमाज्यमिति घृते इदं हविरिति पुनरन्ने इति दक्षिणांगुष्ठमारोप्य ॥ ॐयवोऽसि





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

युवयास्मद्वेषोयवंयारातीः ॥ दिवे त्वांतरिक्षाय त्वा पृथिव्यै त्वा शुन्धंतां लोकाः पितृषदनाः पितृषदनमसि ॥ इति यवान्प्रक्षिप्य कुशादीन्यादाय ॥ ॐअद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमन्नं सोपकरणं वो नमः ॥ यदैकपात्रं भवति तदा वामेन पाणिना पात्रमत्यजन्नेव इदं विष्णुर्विचक्रमे इति पठित्वा यवप्रक्षेपपर्यंतं कृत्वा कुशादीन्यादाय पित्राद्युल्लेखेन पित्रादिदेवेभ्योपि अन्नमुत्सृजेत् ॥ एवमेव मातामहादिदेवेभ्यः भिन्नभिन्नपात्रपक्षे ॥ ॐपृथिवी ते पात्रमित्यादीनां सर्वेषामावृत्तिः ॥ ततो मातृपात्रमुत्तानाभ्यामेव कराभ्यां धृत्वा ॐपृथिवी तेपात्रमित्यादि इदं विष्णुरिति पठित्वा ॐकृष्ण कव्यमिदं रक्ष मदीयम् । ॐइदमन्नमित्यन्ने ॐइमा आप इति जले ॐइदमाज्यमिति घृते ॐइदं हविरिति पुनरन्ने दक्षिणांगुष्ठमारोप्य ॐअपहता असुरा रक्षाꣳसि वेदिषदः ॥ इत्यन्नोपरि यवान्प्रक्षिप्य ॐअद्यामुकगोत्रे मातरमुकीदेवि नांदीमुखाभ्युदयिकश्राद्धे इदमन्नं सोपकरणं ते नमः ॥ एवं पात्रलंभनादिकं कृत्वा प्रत्येकं पितामहीप्रपितामहीभ्यामपि दद्यात् ॥ एवं पितृपात्रमालभ्य ॐपृथिवी ते पात्रमित्यादि पठित्वा पूर्ववत्सर्वं कृत्वा ॐअद्यामुकगोत्रपितरमुकशर्म्मन्नान्दीमुखाभ्युदयिकश्राद्धे इदमन्नं सोपकरणं ते नमः ॥ इति पित्रेऽन्नमुत्सृजेत् ॥ एवं पितामहादिभ्यः पंचभ्योऽपि प्रत्येकमन्नमुत्सृजेत् ॥ ततः प्रांजलिः ॥ ॐअन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ॥ तत्सर्वमच्छिद्रमस्त्विति जपेत् ॥ दर्भेषूपविश्य गायत्रीं त्रिर्जपित्वा ॥ ॐमधु मध्विति जपेत् ॥ ॐमधुवाताऽऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्न्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



रजः ॥ मधुद्यौरस्तुनः पिता ॥ मधुमान्नोवनस्पतिर्मधुमां अस्तु सूर्यः ॥ माध्वीर्गावोभवंतु नः ॥ इत्यादिऋचः पठित्वा अन्यानपि पितृमंत्रान् उदीरतामवर इत्यादीन्जपेत् ॥ अन्यानि पुरुषसूक्तादीनि पवित्राणि जपेत ॥ ततः प्रागग्रकुशत्रयं भूमावास्तीर्य जलेन प्रोक्ष्य जलप्रोक्षितसयवघृतमन्नं कुशादींश्चादाय ॥ ॐअग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यांतु परां गतिम् ॥ इति मंत्रेण कुशोपरि विकिरेत् ॥ तत आचम्य हरिं स्मृत्वा गायत्रीं त्रिर्जपेत् ॥ चतुरस्रां पिंडयोग्यां भूमिं परिष्कृत्य उत्तरोत्तरक्रमेण स्थानत्रये प्रादेशमात्रं परिमाय ततः प्रागग्रां रेखां दर्भपिंजुलीमूलेन ॥ ॐअपहताऽअसुरारक्षांᳬसिवेदिषदः ॥ इति कुर्यात् ॥ ततः प्रत्येकं रेखात्रयोपरि ॥ ॐयेरूपाणि प्रतिमुंचमानाऽअसुराः संतः स्वधयाचरंति ॥ परापुरोनिपुरो ये भरंत्यग्निष्टांल्लोकान्प्रणुदात्यस्मात् ॥ इति मंत्रेणांगारान्भ्रामयेत् ॥ तदुपरि प्रत्येकं कुशत्रयमास्तीर्य ॥ ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥ इति त्रिर्जपित्वा प्रत्येकमवनेजनं दद्यात् ॥ तत्र क्रमः—यवजलगंधपुष्पैर्नवपात्राणि पूरयित्वा पात्रमेकं वामकरे कृत्वा कुशादीन्यादाय ॐअद्यामुकगोत्रे मातरमुकीदेवि नांदीमुखि आभ्युदयिकश्राद्धपिंडस्थानेऽवनेनिक्ष्व ते नमः ॥ इति सर्वदक्षिणकुशत्रयमूले मात्रे अवनेजनं दद्यात् ॥ किंचिज्जलमवशेषयेत् ॥ एवमेव पात्रांतरमादाय तत्कुशमध्ये पितामह्यै तत्कुशत्राग्रे प्रपितामह्यै अवनेजनं दद्यात् ॥ ततश्चापरमादाय कुशादींश्चादाय ॐअद्यामुकगोत्र पितरमुकशर्मन्नांदीमुखाभ्युदयिक



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

श्राद्धे पिंडस्थानेऽवनेनिक्ष्व ते नमः ॥ इति मध्यस्थितकुशत्रयमूले पित्रेऽवनेजनं दद्यात् ॥ एवं तत्कुशत्रयमध्याग्रयोः पितामहप्रपितामहयोरवनेजनं दद्यात् ॥ ततः सप्तमपात्रमादाय कुशादींश्चादाय ॥ ॐअद्यामुकगोत्रमातामहामुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धे पिंडस्थाने अत्रावनेनिक्ष्व ते नमः ॥ इत्यपरकुशत्रयमूले मातामहायावनेजनं दद्यात् ॥ एवं प्रमातामहवृद्धप्रमातामहयोरपि ॥ ततो यवदधिबदरघृतमिश्रान्नव पिंडान्निर्माय एकं पिंडं कुशादींश्चादाय ॥ ॐअद्यामुकगोत्रे मातरमुकीदेवि नांदिमुखि आभ्युदयिकश्राद्धे एष ते पिंडो नमः ॥ इति तदवनेजनस्थाने पिंडं दद्यात् ॥ एवमेव पितामहीप्रपितामहीभ्यां स्वीयस्वीयावनेजनस्थाने पिंडं दद्यात् ॥ ततश्चतुर्थपिंडमादाय ॥ ॐअद्यामुकगोत्रपितरमुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धे एष ते पिंडो नमः ॥ इत्यवनेजनस्थाने पित्रे पिंडं दद्यात् ॥ एवमेव पितामहादिपंचभ्यस्तत्तदवनेजनस्थानेषु प्रत्येकं पंच पिंडान्दद्यात् ॥ ततो दर्भमूले करं प्रोक्ष्याचम्य हरिं स्मृत्वा ॥ ॐअत्र मातरो मादयध्वं यथाभागमावृषायद्ध्वम् ॥ इति पठित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव पथा परावर्तयन् ॥ ॐअमीमदंत मातरोयथाभागमावृषायिषत ॥ इति जपेत् ॥ एवमत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति जप्त्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव पथा परावर्तयन् ॥ एवमेव मातामहादिपक्षे मंत्रजपः ॥ ततोऽवनेजनावशिष्टजलेन प्रत्यवनेजनं दद्यात् ॥ तत्र क्रमः ॥ ॐअद्यामुक गोत्रे मातरमुकीदेवि नांदीमुखाभ्युदयिकश्राद्धे पिंडे प्रत्यवनेनिक्ष्व ते नमः इति तत्पिंडोपरिं,दद्यात् ॥ एवं पितामहीप्रपितामहीभ्याम् ॥ तथा ॐअद्यामुकगोत्रपितरमुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धे पिंडेऽत्र प्रत्यवनेनिक्ष्व ते नमः ॥ इति पिंडोपरि प्रत्यवनेजनं दद्यात् ॥ एवमेव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तत्तत्पिंडोपरि पितामहादिपंचभ्यो दद्यात् ॥ ततो नीवीं विस्रंस्याचम्य हरिं स्मृत्वा सूत्राण्यादाय ॥ ॐनमो वो मातरो रसाय नमो वो मातरः शोषाय नमो वो मातरो जीवाय नमो वो मातरः स्वधायै नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो गृहान्नो मातरो दत्त सतो वो मातरो देष्म एतद्वो मातरः ॥ इति मातॄणां पिंडत्रयोपरि सूत्रं दद्यात् ॥ ॐनमों वः पितरोरसांयुनमोंवःपितरः शोषांयुनमोंवःपितरोजीवायुनमोंवःपितरःस्वधायैनमोंवःपितरोघोरायुनमों वःपितरो मुन्यवेनमोंवःपितरःपितरोनमोंवोगृहान्नः पितरोदत्तसुतोवंःपितरोदेष्मैतद्वः पितरो वासुआधत्त ॥ इत्यनेन पित्रादिपिंडषट्ट्कोपरि प्रत्येकं सूत्रं दद्यात् ॥ ततः कुशत्रययवजलान्यादाय ॐअद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्धपिंडे एतत्ते वासो नमः इति सूत्रमुत्सृजेत् ॥ एवमेव पितामहीप्रपितामहीभ्याम् ॥ ॐअद्यामुकगोत्रपितरमुकशर्मन्नांदीमुखाभ्युदयिक श्राद्धपिंडे एतत्ते वासो नमः ॥ एवं पितामहादिपंचभ्यः सूत्रं दद्यात् ततो गन्धपुष्पधूपदीपतांबूलादिभिः प्रत्येकपिंडमभ्यर्च्य ॥ ॐशिवा आपः सन्त्विति जलम् ॥ ॐसौमनस्यमस्त्विति पुष्पम् ॥ ॐअक्षतं चारिष्टमस्त्विति तंडुलान् ॥ प्रत्येकं पात्रेषु निक्षिप्य कुशादीन्यादाय ॥ ॐअद्यामुकगोत्रामुकदेवी नांदीमुखी आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयतामित्यक्षय्योदकमुत्सृजेत् ॥ एवं पितामह्याः प्रपितामह्याश्चाक्षय्योदकं दद्यात् ॥ तथा ह्यमुकगोत्रः पिताऽमुकशर्मा नांदीमुखः आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिःप्रीयतामिति पित्रे अक्षय्योदकम् ॥ एवं पितामहादिपंचभ्यः अक्षय्योदकं दद्यात् ॥ ततः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ॐअघोरा मातरः सन्त्विति मातृपिंडत्रयोपरि पूर्वाग्रां जलधारां दद्यात् ॥ ततः ॐगोत्रं नो वर्द्धतांदातारोनोऽभिवर्द्धतां वेदाः संततिरेवच ॥ श्रद्धा चनोमाव्यगमुद्बहुदेयंचनोऽस्त्विति ॥ अन्नं चनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्च नः संतु माच याचिष्म कंचन ॥ एताः सत्या आशिषः संतु ॥ इत्याशीः प्रार्थयेत् ॥ ततः सपवित्रकुशत्रयाणि प्रत्येकं मात्रादिपिंडत्रये पित्रादिपिंडत्रये मातामहादिपिण्डत्रये धृत्वा ॥ ॐऊर्ज्जंवहंतीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधास्थतर्पयंत मे पितॄन्[1] ॥ इति मात्रादिपिंडोपरि जलधारां दद्यात् ॥ ततस्तथैव । ॐऊर्ज्जंवहंतीरमृतम्० इत्यादि पठित्वा पित्रादिपिंडषट्कोपरि जलधारां दद्यात् ॥ ऊर्ज्जंवहंतीरमृतं घतं पयः कीलालं परिस्रुतम् ॥ स्वधास्थं तर्पयंतमेपितॄन् ॥ ततः पिण्डानाघ्राय उत्थाप्य पिंडाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ॥ अथ पात्राण्युत्तानानि कृत्वा दक्षिणां दद्यात् ॥ दक्षिणाद्रव्यं फलमूले फलं मूलं वा प्रत्येकम् ॥ तत्र क्रमः ॥ ॐअद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनां विश्वेषां देवानां कृतएतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिदं सुवर्णमग्निदैवतमिमे फलमूले च वनस्पतिदैवते यथायथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ॥ एवं पित्रादिश्राद्धसंबंधिविश्वेदेवश्राद्धसंबंधिदक्षिणां मातामहादिश्राद्धसंबंधिविश्वेदेवश्राद्धदक्षिणां च दद्यात् ॥ ॐअद्यामुकगोत्राया मातुरमुकदेव्या

१ 'मातॄः' इत्यूहः ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नांदीमुख्याः कृतएतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिदं सुवर्णमग्निदैवतमिमे फलमूले च वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इत्यादि ॥ एवं पितामहीप्रपितामह्योरपि ॥ ॐअद्यामुकगोत्रस्य पितुरमुकशर्म्मणो नांदीमुखस्य कृत एतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ॥ एवं पितामहादिश्राद्धदक्षिणां दद्यात् ॥ वाजें वाजेवतवाजिनो नोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वं तृप्तायातप थिभिर्देवयानैः ॥ एवं वाजेवाज इत्यादिना मात्रादिविसर्जनम् ॥ ॐविश्वेदेवाः प्रीयन्तामिति देवविसर्जनम् ॥ ततो देवताभ्य इति त्रिर्जपः ॥ दीपनिर्वापणम् ॥ आचमनम् ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् ॥ इति आभ्युदयिकश्राद्धपद्धतिः समाप्ता ॥ अथ मंडपपूजनम् ॥ अथ प्रक्षालितपाणिपादः शिखां बद्ध्वा आचम्य कुशोत्तरे यज्ञियदारुमये आसने उपविश्य संकल्पं कुर्यात् ॥ तद्यथा— ॐश्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जंबूद्वीपे भरतखंडे आर्यावर्तांतर्गतमध्यदेशे बौद्धावतारे वर्तमाने यथानामसंवत्सरे अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकनक्षत्रयोगकरणमुहूर्तवर्तमानायामेवंगुणविशेषणविशिष्टायां शुभतिथौ अद्यामुकगोत्रस्य मम सकुटुंबस्य सपरिवारस्य सर्वारिष्टप्रशांत्यायुरारोग्यैश्वर्य्यसुखश्रीप्राप्त्यर्थं पुत्रपौत्रधनधान्यादिसंपत्प्रवृद्धये



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अभिलषितमनोरथानां सिद्धये अस्यां वास्तुरचनायां मम गृहे वृक्षच्छेदनकृमिकीटादिहिंसाजनितसर्वदोषोपशांतये अस्यांभूमौ चांडालादिगृहे अमेध्यभक्षणाभक्ष्यभक्षणात्तत्तज्जातिजन्यदोषनिवृत्तये शुभकारकशिख्यादिदेवताप्रीतये भूमिशुद्धिपूर्वकेष्टकानां प्रार्थनापूजनपूर्वकषोडशस्तंभस्थापनपूर्वकं तत्तत्स्तंभेषु तत्तन्मंत्रैर्यथाविहिताश्वत्थौदुंबरप्लक्षवटकृततोरणानां स्थापनं तथाच पताकाध्वजानां स्थापनं महाध्वजास्थापनं तदनंतरमेकाशीतिपदे ❀ वास्तुमंडले प्रधानदेवतापूजनपूर्वकसर्वतोभद्रमंडले ❀ नवग्रहस्थापनपूर्वकेंद्रादिदशदिक्पालानामधिदेवताप्रत्यधिदेवतानां स्थापनं पूजनं च तदनंतरमुचिताहवनीयविधौ अग्नि स्थापनं तत्तन्मंत्रैः अधिदेवताप्रत्यधिदेवतासहितवास्तुदेवतायाः हवनं तदनंतरं योगिनीस्थापनं द्विपंचाशद्भैरवसहितैकोनपंचाशन्मरुद्गणानां स्थापनं पूजनं च ततः पापघटदानपूर्वकच्छायापात्रादिदानैः कृतशुद्धतनुः आदौ कर्मांगत्वेन प्राप्तं मंडपपूजनमहं करिष्ये ॥ इति प्रतिज्ञासंकल्पः ॥ आचमनं प्राणायामं गणपतिपूजारक्षातिलकादिकं कृत्वा ॥ अथ च्छायापात्रदानम् ॥

अमुकवारनक्षत्रयोगकरणमुहूर्त्तवर्त्तमानायाममुकगोत्रोत्पन्नस्य मम सर्वापच्छांतिपूर्वकविपुलधनधान्यकीर्तियशोलाभप्राप्त्यर्थं कृतैतन्नूतनगृहनिर्माणनिमित्तकज्ञाताज्ञातजन्यपापक्षयार्थं सुवर्णघृतयुतं छायापात्रममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय दातुमहमुत्सृजे ॥ ततो यजमानः मंडपस्य पश्चिमद्वारभागे प्राङ्मुख उपविश्य गुरुगणपतिशिवान्नत्वा देशकालौ संकीर्त्य मंडपस्तंभद्वारतोरणत्रिशूलदिक्पालध्वजपताकावेदिस्तंभानां स्थापनप्रतिष्ठापूर्वकपूजनमहं करिष्ये ॥ ततो मध्यवेद्याम् आग्नेयादिस्तंभचतुष्टयेषु तथा बाह्यवेद्याम् आग्नेय्यादिद्वादशस्तंभेषु स्योनापृथिवीति खननम् ॥ ॐस्योनापृथिविनोभ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



| एकाशीतिपदम्. | | | गृहम्. | | | वास्तुमंडलम्. | | |
|---|---|---|---|---|---|---|---|---|
| ईशान. ० | ० ० | ० | ० ० ० ० | | ० ० ० ० | ० | ० ० | आग्ने. ० |
| ० ० ० | | ० | ० ० ० ० | | ० ० ० | ० | | ० ० ० |
| ० | ० | ० ० ० | ० ० | ० ० | ० ० | ० ० ० | ० | ० |
| ० ० ० ० | ० ० ० ० | ० ० | ० | ० | ० | ० ० | ० ० ० ० | ० ० ० ० |
| | | ० ० | ० | ० | ० | ० ० | | |
| ० ० ० ० | ० ० ० ० | ० ० | ० | ० | ० | ० ० | ० ० ० ० | ० ० ० ० |
| ० | ० | ० ० ० | ० ० | ० ० | ० ० | ० ० ० | ० | ० |
| ० ० ० | | ० | ० ० ० ० | | ० ० ० ० | ० | | ० ० ० |
| ० वा. | ० ० | ० | ० ० ० ० | | ० ० ० ० | ० | ० ० | ० नैर्ऋत्य |

## ॥ अथ वास्तुमण्डलकोष्ठेषु रंगपूरणार्थं बिन्दुचिन्हानि तेषां सूचना ॥

☐ एतादृशेषु शून्यकोष्ठेषु श्वेततण्डुलान् पूरयेत् ।

[०] यत्र कोष्ठे एकबिन्दुस्तत्र रक्ततण्डुलान् पूरयेत् ।

[० ०] यत्र च बिन्दुद्वयं तत्र पीततण्डुलान् पूरयेत् ।

[० ० ०] यत्र बिन्दुत्रयं तत्र हरिततण्डुलान् पूरयेत् ।

[० ० ० ०] यत्र बिन्दुचतुष्टयं तत्र कृष्णतण्डुलान् पूरयेत् ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

## अथ सर्वतोभद्रमण्डलकोष्ठेषु रंगपूरणार्थं बिन्दुचिन्हानि । ❋

एतादृशेषु शून्यकोष्ठेषु श्वेततण्डुलान पूरयेत्।

यत्र कोष्ठे एकबिन्दुस्तत्र रक्ततण्डुलान् पूरयेत् ।

यत्र च बिन्दुद्वय तत्र पीततण्डुलान पूरयेत् ।

यत्र तु बिन्दुत्रयं तत्र हरितण्डुलान पूरयेत् ।

एतादृशेषु कृष्णकोष्ठेषु कृष्णतण्डुलान पूरयेत् ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वानृक्षरानिवेशनी ॥ यच्छांनः शर्मसुप्रथाः ॥ ततः सिंचतीत्यनेन जलासेकः ॥ ॐसिंचंति परिषिंचुंत्युत्सिंचतिपुनंतिं च ॥ सुरांयैबभ्रवैमदेंकिंत्वोव्वंदतिकिंत्वः ॥२०॥ दधिक्राव्ण इति दधिसेचनम् ॥ ॐदधिक्राव्णोंऽअकारिषं जिष्णोरश्वंस्यव्वाजिनंः॥ सुरभिनोमुखांकरत्प्रणआयूंष्षितारिषत् ॥ ततः धानावंत इति यवप्रक्षेपः ॥ ॐधानावंतङ्करम्भिणमपूपवंतमुक्थिनम् ॥ इन्द्र प्रातर्जुषस्व नः ॥ हिरण्यगर्भ इति हिरण्यम् ॥ ॐहिरण्यगर्भः समंवर्त्ततायें भूतस्यं जातः पतिरेक आसीत् ॥ सदांधारपृथिवीं द्यामुतेमांकस्मैं देवायं हविषा विधेम ॥ कांडात्कांडादिति दूर्वाप्रक्षेपः ॥ ॐकांडात्कांडात्प्ररोहंतिपरुषःपरुषस्परिं ॥ एवानों दूर्वे प्रतंनुसहस्रेणशतेनं च ॥ ऊर्द्ध्वऊषुणः इति स्तंभरोपणम् ॥ ॐऊर्द्ध्वऊषुणंऽऊतयेतिष्ठा देवोनःसंविता ॥ ऊर्द्ध्वो व्वाजंस्य सनिंतायदंजिभिर्व्वाघद्भिर्विह्वयांमहे ॥ वसोः पवित्रमसीति स्तंभे सूत्रबन्धनम् ॥ ॐ वसोंः पवित्रंमसिशुतधांरंवसोंःपवित्रंमसि सहस्रंधारम् ॥ देवस्त्वांसवितापुंनातुवसोंःपवित्रेण शुतधांरेण सुप्वाकामंधुक्षः ॥ एवं सर्वेषां षोडशस्तंभानां स्थापनम् ॥ ततो मध्यस्तंभचतुष्टयमाग्नेय्यादिक्रमेण तत्तन्नामभिः स्थापयामि ॥ आग्नेय्यां विजयं स्थापयामि ॥ नैर्ऋत्यां केदारं स्थापयामि ॥ वायव्यां श्रीमंतं स्थापयामि ॥ ऐशान्यां सुभद्रं स्थापयामि ॥ बाह्यवेद्यामाग्नेयादिक्रमेणैव स्थापनम् ॥ आग्नेय्यां धनदं स्थापयामि ॥ कल्याणं स्थापयामि ॥ शुभं स्थाप० ॥ शांतं स्था० ॥ मनोरमं स्था० ॥ ऋद्धिं स्था० ॥ सिद्धिं स्था० ॥ विचित्रं स्था० ॥ महायशसं स्था० ॥ मंगलं स्था० ॥ गुणं स्था० ॥ जयं स्था० ॥ एवं षोडशस्तं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भान्संस्थाप्य ततः अग्निमीळे इति मंत्रेण बहुमंगलनामानं पूर्वद्वारं स्थापयामि ॥ ॐअग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्॥
होतारंरत्नधातमम् ॥ इषेत्वेति मंत्रेण धर्मिष्ठानामानं दक्षिणद्वारं स्था० ॥ इषेत्वोर्ज्जेत्वांवायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठ
तमायकर्म्मणऽआप्यायद्धमघ्न्याऽइंद्रायभागंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंꣳसोद्ध्रुवाअस्मिन्गोपतौस्या
तबह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ अग्न आयाहि वीतये इति मंत्रेण जयाभिधं पश्चिमद्वारं स्था० ॥ अग्नआयाहि वीतयेगृ
णानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ शन्नोदेवीति मंत्रेण कल्याणनामानमुत्तरद्वारं स्थाप० ॥ शन्नोदेवीरभिष्टयआपो
भवंतु पीतये ॥ शंय्योरभिस्रवंतुनः ॥ एवं द्वाराणि संस्थाप्य ॥ एभिरेव मंत्रैश्चतुर्दिक्षु तोरणानि स्थापयेत् ॥ पूर्वस्यां सुदृढनाम
कमाश्वत्थं तोरणं स्थापयामि तस्य मस्तके मंगलाख्यं वैष्णव त्रिशूलं स्थापयामि ॥ एवं दक्षिणस्यां विकटाख्यमौदुंबरं
तोरणं स्थापयामि ॥ तस्य मस्तके शत्रुघ्ननामकं रौद्रं त्रिशूलं स्थापयामि ॥ पश्चिमस्यां भीमाख्यं प्लाक्षं तोरणं स्थापया
मि ॥ तस्य मस्तके पुत्रप्रदनामानं ब्राह्मं त्रिशूलं स्थापयामि ॥ उत्तरस्यां सुप्रभाख्यं वटतोरणं स्थापयामि ॥ तस्य मस्तके
उत्तमाभिधं सौम्यं त्रिशूलं स्थापयामि ॥ एवं तोरणानि संस्थाप्य ॥ वेदीनां स्थापनं कुर्यान्मध्यवेदिं शिवप्रदाम् ॥ एव
मेवापरवेदीनामपि स्थापनं ज्ञेयम् ॥ अनंतरं पूर्वादिदिक्षु ब्रह्मविष्णुरुद्रदेवांश्च पूजयेत् ॥ पूर्वस्यां ब्रह्मजज्ञानमिति मंत्रेण
ब्रह्माणमावाह्य पूजयेत् ॥ ॐब्रह्मजज्ञानं प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिम

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



संतश्रुविवः ॥ दक्षिणस्यामिदं विष्णुरिति मंत्रेण विष्णुमावाह्य पूजयेत् ॥ इदं विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्य पांसुरेस्वाहा ॥ पश्चिमस्यांत्र्यंबकमितिमंत्रेण रुद्रमावाह्य पूजयेत् ॥ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ एवं रुद्रं संपूज्य प्रार्थयेत् ॥ पंचवक्र वृषारूढ त्रिलोचन सदाशिव ॥ चंद्रमौले महादेव मम स्वस्तिकरो भव ॥ ततो देवमंत्रेण देवानावाह्य पूजयेत् ॥ ततः आधार इतिमंत्रेण अप आवाह्य पूजयेत् ॥ आधारः सर्वभूतानामापो जीवनहेतवः ॥ प्रवर्तते शुभं याभ्यस्ता देव्यः शुभदाः सदा ॥ ततः इष्टकास्थापनम् ॥ इष्टकादेवता आवाह्य पूजयेत् ॥ तासामभिधानानि ॥ पूर्वस्यां शिवां स्थापयामि इंद्राय नमः ॥ आग्नेय्यां गंगां स्थापयामि अग्नये नमः ॥ दक्षिणस्यां महापुण्यां स्थापयामि यमाय नमः ॥ नैर्ऋत्यां विशालां स्थापयामि निर्ऋतये नमः ॥ पश्चिमस्यां सरस्वतीं स्थापयामि वरुणाय नमः ॥ वायौ तुष्टिं स्थापयामि वायवे नमः ॥ उदीच्यां पुष्टिं स्थापयामि कुबेराय नमः ॥ ऐशान्यामृद्धिं स्थापयामि ईशानाय नमः ॥ एवं सांगं मंडपस्थापनं कृत्वा ॥ ऋत्विग्भिराचार्येण सहितो यजमानोऽर्घहस्तः शांतिसूक्तं पठन्पश्चिमद्वारे स्थित्वा चतुर्भुजां शुक्लवर्णां कूर्म्मपृष्ठोपरिस्थितां पद्मशंखचक्रशूलधरां सुप्रसन्नां पृथिवीं ध्यात्वा ॥ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ॥ पृथिवि ब्रह्मदत्तासि काश्यपेनाभिवंदिता ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ दंष्ट्राग्रे लीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥ इत्यर्घ्यं दत्त्वा कलशं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

गृहीत्वा गीतवाद्यादिना सह भद्रं कर्णेभिरित्यादिमंत्रं पठन् मंडपं प्रदक्षिणीकृत्य तेनैव पश्चिमद्वारेण मंडपे प्रविशेत् ॥ ॐ भद्रंकर्णेभिः शृणुयाम देवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाᳬंसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ततः आचार्यः सर्षपानादाय ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामविरोधेन वास्तुकर्म समारभेत् ॥ पूर्वे रक्षतु गोविंद आग्नेय्यां गरुडध्वजः ॥ याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥ वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः ॥ उत्तरे श्रीधरो रक्षेदीशाने तु गदाधरः ॥ ऊर्ध्वं गोवर्द्धनो रक्षेदधस्ताच्च त्रिविक्रमः ॥ एवं दश दिशो रक्षेद्वासुदेवो जनार्द्दनः ॥ शंखो रक्षतु यज्ञाग्रे पृष्ठे खड्गस्तथैव च ॥ वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः ॥ ब्रह्माणं माधवो रक्षेत्त्वाचार्यं पातु माधवः ॥ अच्युतोऽवतु ऋग्वेदं यजुर्वेदमधोक्षजः ॥ कृष्णश्च सामगं रक्षेदाथर्वकं च माधवः ॥ उपदेष्टा तु यो विप्रस्तं रुद्रोवतु सर्वदा ॥ यजमानं सपत्नीकं कमलाक्षश्च रक्षतु ॥ रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षतां हरिः ॥ वेदमंत्रैश्च कर्तव्या रक्षा सूत्रैश्च सर्षपैः ॥ ॐ गुणानांत्वागुणपतिᳬंहवामहेप्रियाणांत्वाप्रियपतिᳬंहवामहेनिधीनांत्वांनिधिपतिᳬंहवामहेव्वसो मम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ १८ ॥ ॐ जातवेदसेसुनवामसोममरातीयतो निदहाति वेदः ॥ सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुं दुरितात्यग्निः ॥ इत्युक्त्वा सर्षपान्विकीर्य ॥ देवा आयांतु यातुधाना अपयांतु विष्णो देवयजनं रक्षस्वेति रक्षां कृत्वा पंचगव्येन मंडपप्रोक्षणं कुर्यात् ॥ तत्र क्रमः ॥ प्रथमं गायत्र्या गोमूत्रेण प्रोक्षणम् ॥ ॐ भूर्भुवः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



स्वः तत्संवितुर्व्वरेण्युंभर्गोंदेवस्य धीमहि ॥ धियोयोनंःप्रचोदयात् ॥ गंधद्वारमिति गोमयेन प्रोक्षणम् ॥ गंधंद्वारांदुराधुर्षां नित्यपुष्टांकरीषिणींम् ॥ ईश्वरीं सर्व भूतानांताम्रिहोपंह्वयेश्रियंम् ॥ आप्यायस्वेति क्षीरेण प्रोक्षणम् ॥ ॐआप्यांयस्वसमेंतुते विश्वतः सोमवृष्णयंम् ॥ भवावाजंस्यसंगुथे ॥ दधिक्राव्णवइति दध्ना प्रोक्षणम् ॥ दधिक्राव्णोंऽअकारिषं जिष्णोरश्वंस्यवाजिनः ॥ सुरभिनोमुखां करत्प्रणआयूंᳬषितारिषत् ॥ शुक्रमसीत्याज्येन प्रोक्षणम् ॥ शुक्रमसि चंद्रमस्यमृतमसि वैश्वदेवमसि ॥ देवस्यत्वेति कुशोदकेन प्रोक्षणम् ॥ ॐदेवस्यंत्वासवितुःप्रंसुवेऽश्विनोंर्बाहुभ्यांपूष्णोहस्तांभ्याम् ॥ सरस्वत्यैवाचोयंतुर्य्यंत्रेणाग्नेः साम्राज्येनाभिषिंचामि ॥ ततोंजलौ पुष्पाण्यादाय ॥ ब्रह्माद्याः स्तंभदेवा ये द्वारतोरणसंस्थिताः ॥ पताकासु च ये देवा ध्वजाग्रेषु च संस्थिताः ॥ आवाहयामि तान्सर्वान्यज्ञरक्षार्थंहेतवे ॥ गृह्णंतु पूजनं सर्वे क्रतुं रक्षंतु सर्वतः ॥ इति मंत्रं पठित्वा ॥ अथ षोडशस्तंभपूजा ॥ तत्र यजमानः प्राङ्मुख उपविश्य प्राणानायम्य देशकालौ स्मृत्वा अद्यामुकगोत्रस्य मम सकुटुंबस्य आयुरारोग्यैश्वर्य्यसुखश्रीपुत्रपौत्रधनधान्यादिसंपत्प्रवृद्धये अस्यां भूमौ चंडालादिगृहामेध्यभक्षणाभक्ष्यभक्षणवृक्षच्छेदनादिदोषोपशांत्यर्थं वास्तुदेवप्रीतये मंडपस्तंभदेवानां द्वारतोरणत्रिशूलपताकाध्वजासहितानां दिक्पतीनां च पूजनमहं करिष्ये ॥ इति संकल्पः ॥ मध्यवेद्या ईशानस्तंभे ॥ एह्येहि विप्रेंद्र पितामहेश हंसाधिरूढ त्रिदशैकवंद्य ॥ श्वेतोत्पलाभास कुशांबहस्त गृहाण पूजां भगवन्नमस्ते ॥ हंसपृष्ठसमारूढ देवतागणपूजित ॥ ईशा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नकोणस्थितं स्तंभमलंकुरु जगत्पते ॥ ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छ ॥ ब्रह्मजज्ञानमित्यनेनैव मंत्रेण ब्रह्मणः स्थापनं ब्रह्मणे नमः
इह तिष्ठ ॥ ॐब्रह्मंजज्ञानंप्रंथमंपुरस्ताद्विसींमुतःसुरुचोंव्वेनऽआंवः ॥ सबुध्न्याउपमाअस्यव्विष्ठाःसुतश्चयोनिमसंतश्चव्विवंः ॥
ॐब्रह्मणे स्नानं वस्त्रं गंधं पुष्पं धूपं दीपं नैवेद्यम् ॥ एतानि गंधपुष्पधूपदीपनैवेद्यांतानि ब्रह्मणे नमः ॥ एवं संपूज्य प्रार्थ
येत् ॥ वेदाधाराय देवाय ज्ञानगम्याय सूरये ॥ कमंडलवक्षमालास्त्रुक्स्त्रुवहस्ताय ते नमः ॥ कृष्णाजिनांबरधर पद्मासन
चतुर्मुख ॥ जटाधर जगद्धातः प्रसीद कमलोद्भव ॥ सावित्र्यै नमः ॥ वास्तुदेवतायै नमः ॥ ब्राह्म्यै नमः ॥ गंगायै नमः ॥
स्तंभमालभ्य ऊर्ध्वऊषुण इति मंत्रं पठेत् ॥ ऊर्ध्वऊषुणंऽऊतयेतिष्ठांदेवोनसंविता ॥ ऊर्द्धोव्वाजंस्यसनितायदञ्जिभिर्व्वाघद्भि
र्विह्वयांमहे ॥ स्तंभशिरसि नागमात्रे नमः ॥ आयंगौरिति मंत्रेण शाखाबंधनानि पूजयेत् ॥ आयंगौः पृश्निरक्रमीदसंद
न्मातरं पुरः ॥ पितरं चप्रयन्त्स्वंः ॥ अथ आग्नेयमध्यस्तंभे ॥ आवाहयेत्तं गरुडोपरि स्थितं रमार्द्धदेहं सुरराजवंदितम् ॥
कंसांतकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवसूनुम् ॥ पद्मासन हृषीकेश कंसचाणूरमर्दन ॥ आगच्छ भगवन्विष्णो स्तंभेऽ
स्मिन्संन्निधो भव ॥ ॐभूर्भुवःस्वः विष्णो इहागच्छ इहतिष्ठ ॥ इदंविष्णुरिति यजुः ॥ इदंविष्णुर्विचंक्रमेत्रेधानिदंधेपदम् ॥
समूंढमस्यपांᳪसुरेस्वाहा ॥ नमस्ते सर्वदेवेश नमस्ते पुरुषोत्तम ॥ नमस्ते सर्वलोकाय विष्णवे ते नमोनमः ॥ इति नत्वा
पाद्यादिभिः विष्णुं पूजयेत् ॥ ततः प्रार्थना ॥ देवदेव जगन्नाथ विष्णो यज्ञपते विभो ॥ पाहि दुःखांबुधेरस्माद्भक्तानुग्रहारक ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



लक्ष्म्यै नमः ॥ आदित्यनंदायै नमः ॥ वैष्णव्यै नमः ॥ ततो निर्ऋतिमध्यस्तंभे ॥ एह्येहि गौरीश पिनाकपाणे शशांकमौले वृषभाधिरूढ ॥ देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ गंगाधर महादेव पार्वतीप्राणवल्लभ ॥ आगच्छ भगवन्नीश स्तंभेऽस्मिन्संन्निधो भव ॥ ॐभूर्भुवःस्वः शंकर इहागच्छ इहतिष्ठ॥ परिनोरुद्रस्येति ऋक् ॥ परिनोरुद्रस्यहेतिर्वृणक्तु परित्वेषस्यंदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडय ॥ नमःशंभवायचेति यजुः ॥ ॐनमः शंभवायचमयोभवायचनमः शंकरायचमयस्करायचनमः शिवायचशिवतराय च ॥ आवोराजेति साम ॥ नमस्तेस्त्वायते इति स्थापनम् ॥ शंकराय नमः ॥ इति पाद्यादिभिः पूजयेत् ॥ अथ नमस्कारः ॥ वृषवाहाय देवाय पार्वतीपतये नमः ॥ वरदायार्द्धकामाय नमश्चंद्रार्द्धमौलिने ॥ इति नमस्कारः ॥ ततः प्रार्थना ॥ पंचवक्त्र वृषारूढ त्रिलोचन सदाशिव ॥ चंद्रमौले महादेव मम स्वस्तिकरो भव ॥ गौर्यै नमः ॥ माहेश्वर्यै नमः ॥ शोभनायै नमः ॥ ततो वायव्यमध्यस्तंभपूजा ॥ एह्येहि वृत्रघ्न गजाधिरूढ सहस्रनेत्र त्रिदशैकराज ॥ शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ शचीपते महाबाहो सर्वाभरणभूषित ॥ आगच्छ भगवन्निंद्र स्तंभेऽस्मिन्सन्निधो भव ॥ इंद्र इहागच्छ ॥ त्रातारमिंद्रमिति ऋक् ॥ ॐ त्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳ स्वस्तिनोमघवाधात्विंद्रः ॥ महांइंद्रोवज्रहस्त इति यजुः ॥ ॐ महांऽइंद्रोवज्रहस्तःषोडशीशर्म्मयच्छतु ॥ हंतुपाप्मानं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

य्योस्मान्द्वेष्टि ॥ उ पयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा ॥ १० ॥ इंद्रंनारइतिसाम ॥ इंद्रमहंवणि जमितिमंत्रेण इंद्रस्थापनम् ॥ इंद्राय नमः ॥ पाद्यादिभिः इंद्रं पूजयेत् ॥ ततो नमस्कारः ॥ पुरंदर नमस्तेस्तु वज्र हस्त नमोस्तु ते ॥ शचीप्रिय नमस्तुभ्यं नमस्ते मेघवाहन ॥ इति नमस्कारः ॥ ततः प्रार्थना ॥ देवदेव गजारूढ पुरंदर शतक्रतो ॥ वज्रहस्त महाबाहो वांछितार्थप्रदो भव ॥ इंद्राण्यै नमः ॥ आनंदायै नमः ॥ विभूत्यै नमः ॥ इति मध्यवेदिस्तं भचतुष्टयपूजा ॥ ततो बाह्यद्वादशस्तंभेषु ईशानकोणादारभ्य द्वादशस्तंभान्पूजयेत् ॥ अथ ईशानकोणस्तंभपूजा ॥ आवाह येत्तं द्विभुजं दिनेशं सप्ताश्ववाहं द्युमणिं ग्रहेशम् ॥ सिंदूरवर्णं प्रतिभावभासं भजामि सूर्यं कुलवृद्धिहेतोः ॥ पद्महस्त महाबाहो सप्तश्वेताश्ववाहन ॥ आगच्छ भगवन्भानो स्तंभेऽस्मिन्सन्निधो भव ॥ ॐभूर्भुवः स्वः सूर्य इहागच्छ ॥ चित्रंदेवानामिति ऋक् ॥ चित्रंदेवानामुदगादनीकंचक्षुर्म्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षᳬंसूर्य्यआत्माजगतस्तस्थुषश्चस्वाहा ॥ ४२ ॥ आकृष्णेनरजसेतियजुः ॥ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुव नानिपश्यन् ॥ ४३ ॥ उदुत्यमितिसाम ॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्य्यᳬंस्वाहा ॥ ४१ ॥ अदृश्रमस्य केतव इत्यनेन स्थापनम् ॥ ॐ अदृश्रमस्य केतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥ उपयामगृहीतोसिसूर्य्याय त्वाभ्राजायैषतेयोनिः सूर्य्यायत्वा भ्राजाय ॥ सूर्य्यभ्राजिष्ठभ्राजिष्ठस्त्वं देवेष्वसिभ्रा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



जिष्ठोहम्मनुष्येषुभूयासम् ॥ ४० ॥ सूर्य्याय नमः ॥ पाद्यादिभिः सूर्यं पूजयेत् ॥ अथ नमस्कारं कृत्वा प्रार्थयेत् ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयाय त्रिगुणात्मधारिणे विरंचिनारायणशंकरात्मने ॥ ॥ १ ॥ पद्महस्त रथारूढ पद्मासन सुमंगल ॥ कृपां कुरु दयालो त्वं ग्रहराज नमोस्तुते ॥ गौर्य्यै नमः ॥ भूम्यै नमः ॥ सावित्र्यै नमः ॥ मंगलायै नमः ॥ अथ ईशानपूर्वयोरंतरालस्तंभपूजा ॥ आवाहयेत्तं गणराजदेवं रक्तोत्पलाभासमशेषवंद्यम् ॥ विघ्नांतकं विघ्नहरं गणेशं भजामि रौद्रं सहितं च सिध्या ॥१॥ लंबोदर महाकाय गजवक्त्र चतुर्भुज ॥ आगच्छ त्वं जगन्नाथ स्तंभेऽस्मित्सन्निधो भव ॥ २ ॥ भूर्भुवः स्वः गणेश इहागच्छ ॥ गणानांत्वा इति ऋक् ॥ गुणानां त्वागुणपतिꣳहवामहे प्रियाणां त्वाप्रियपतिꣳहवामहे निधीनांत्वांनिधिपतिꣳहवामहेवुसोमम ॥ आहमंजानिगर्ब्भधमात्वमंजासिगर्ब्भधम् ॥ ॥१॥ अनेन गणपतिस्थापनम् ॥ ॐगणपतये नमः ॥ पाद्यादिभिः गणेशं पूजयेत् ॥ अथ नमस्कारः ॥ लंबोदर महाकाय सततं मोदकप्रिय ॥ गौरीसुत गणेश त्वं विघ्नराज प्रसीद मे ॥१॥ ततः प्रार्थना ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥२॥ सरस्वत्यै नमः ॥ विघ्नहारिण्यै नमः ॥ जयायै नमः ॥ ततः पूर्वाग्नेय्योरंतराल स्तंभपूजा ॥ एह्येहि दंडायुध धर्मराज कालांजनाभास विशालनेत्र ॥ विशालवक्षस्थलरुद्ररूप गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ चित्रगुप्तादिसंयुक्त दंडमुद्गरधारक ॥ आगच्छ भगवन्धर्म स्तंभेऽस्मिन्संन्निधो भव ॥ २ ॥ ॐभूर्भुवःस्वः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यम इहागच्छ ॥ यस्मिन्वृक्षेति ऋक् ॥ यमायत्वा इति यजुः ॥ यमायत्वामुखायत्वासूर्य्यस्युत्त्वातपंसे ॥ देवस्त्वांसवितामद्ध्वानक्तुपृथिव्याःसछंस्पृशंस्पाहि ॥ अर्चिरसिशोचिरंसितपोंसि ॥ १ ॥ नाकेसुपर्ण इति साम ॥ यमोमृत्युरथमारा इति स्थापनम् ॥ यमायनमः ॥ पाद्यादिभिः यमं पूजयेत् ॥ अथ नमस्कारप्रार्थना ॥ ईषत्पीन नमस्तेऽस्तु दंडहस्त नमोस्तु ते ॥ महिषस्थ नमस्तेऽस्तु धर्मराज नमोऽस्तु ते ॥ १ ॥ धर्मराज महाकाय दक्षिणाधिपतये नमः ॥ रक्तेक्षण महाबाहो मम पीडां निवारय ॥ २ ॥ पूर्वसंध्यायै नमः ॥ जन्यै नमः ॥ क्रूरायै नमः ॥ नियंत्र्यै नमः ॥ अथ बाह्याग्निकोणस्तंभपूजा ॥ एह्येहि नागेंद्र धराधरेश सर्वामरैर्वंदितपादपद्म ॥ नानाफणामंडलराजमान गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ आशीविषसमोपेत नागकन्याविराजित ॥ आगच्छ नागराजेंद्र स्तंभेऽस्मिन्सन्निधो भव ॥ २ ॥ ॐ भूर्भुवःस्वः नागराज इहागच्छ ॥ कालिको नाम सर्प इति ऋक् ॥ नमोस्तुसर्पेभ्य इति यजुः ॥ नमोंस्तुसर्प्पेभ्योयेकेचं पृथिवीमनुं ॥ येअंतरिंक्षेयेदिवितेभ्यःसर्प्पेभ्योनमंः ॥ ६ ॥ अभायिमाहे इति साम ॥ स्वप्नंस्वप्नेभिकर्णे इति स्थापनम् ॥ नागराजाय नमः ॥ पाद्यादिभिः नागराजं पूजयेत् ॥ ततो नमस्कारप्रार्थना ॥ नमः खेटकहस्तेभ्यस्त्रिभोगेभ्यो नमोनमः ॥ नमो भीषणदेहेभ्यः खड्गधृग्भ्यो नमोनमः ॥ १ ॥ खड्गखेटकधराः सर्पाः फणामंडलमंडिताः ॥ एकभोगाः साक्षसूत्रा वरदाः संतु मे सदा ॥ २ ॥ मध्यसंध्यायै नमः ॥ धरायै नमः ॥ पद्मायै नमः ॥ महापद्मायै नमः ॥ अथाग्नेयदक्षिणयोरंतरालस्तंभ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



पूजा ॥ आवाहयामि देवेशं षण्मुखं कृत्तिकासुतम् ॥ रुद्रतेजःसमुत्पन्नं देवसेनासमन्वितम् ॥ १ ॥ मयूरवाहनं शक्तिपाणिं
वै ब्रह्मचारिणम् ॥ आगच्छ भगवन्स्कंद स्तंभेऽस्मिन्सन्निधो भव ॥ २ ॥ ॐभूर्भुवःस्वः स्कंद इहागच्छ ॥ बलित्थापर्व
तानामिति ऋक् ॥ यदक्रंद इति यजुः ॥ यदक्रंदःप्रथमंजायमानउद्यन्त्संमुद्रादुतवापुरीषात् ॥ श्येनस्यंपक्षाहरिणस्यंबाहू
ऽउंपस्तुत्यंमहिंजातं तें अर्व्वन् ॥ १२ ॥ राजान इति साम ॥ अग्निरिवमन्य इत्यनेन स्कंदस्थापनम् ॥ स्कंदाय नमः ॥
पाद्यादिभिः स्कंदं पूजयेत् ॥ अथ नमस्कारः ॥ नमः स्कंदाय शैवाय घंटाकुक्कुटधारिणे ॥ पताकाशक्तिहस्ताय षण्मु
खाय नमोनमः ॥ १ ॥ ततः प्रार्थना ॥ मयूरवाहन स्कंद गौरीसुत षडानन ॥ कार्तिकेय माहाबाहो दयां कुरु दयानिधे ॥
॥ २ ॥ पश्चिमसंध्यायै नमः ॥ अथ दक्षिणनैर्ऋत्यांतरालस्तंभपूजा ॥ आवाहयामि देवेशं भूतानां देहधारिणम् ॥ सर्वा
धारं महावेगं मेघवाहनमीश्वरम् ॥ १ ॥ गंधर्वैः सह गंतारं त्रैलोक्यांतरचारिणम् ॥ आगच्छ भगवन्वायो स्तंभेऽस्मिन्
सन्निधो भव ॥ २ ॥ ॐभूर्भुवःस्वः वायो इहागच्छ ॥ वायवाया इति ऋक् ॥ तव वायवृतस्पते इति यजुः ॥ तवंवाय
वृतस्पतेत्वष्टुर्ज्जामातरद्भुत ॥ अवांॅस्यावृंणीमहे ॥ ३४ ॥ वातआवातु इति साम ॥ आनोंनियुद्भिरितिस्थापनम् ॥ आनों
नियुद्भिःशतिनींभिरध्वरॅंसंहस्रिणींभिरुपंयाहियज्ञम् ॥ व्वायोंऽअस्मिन्त्सवंनेमादयस्वयूयम्पांतस्वस्तिभिःसदांनः ॥
॥ २८ ॥ वायवे नमः ॥ पाद्यादिभिः वायुं पूजयेत् ॥ अथ नमस्कारः ॥ नमोधरणिपृष्ठस्थ समीरण नमोऽस्तु ते ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

धूम्रवर्ण नमस्तेऽस्तु शीघ्रगामिन्नमोऽस्तु ते ॥ १ ॥ ततः प्रार्थना ॥ यावद्धरणिपृष्ठस्थ ध्वजहस्त समीरण ॥ दंडहस्त मृगारूढ वरं देहि वरप्रद ॥ २ ॥ वायव्यै नमः ॥ गायत्र्यै नमः ॥ मध्यसंध्यायै नमः ॥ अथ निर्ऋतिस्तंभपूजा ॥ आवाहयामि देवेशं शशांकं रजनीपतिम् ॥ क्षीरोदधिसमुद्भूतं हरमौलिविभूषणम् ॥ सुधाकरं द्विजाधीशं त्रैलोक्यस्नेहकारकम् ॥ औषध्याप्यायनकरं सोमं कंदर्पवर्द्धनम् ॥ आगच्छ भवन्सोमस्तंभेस्मिन्सन्निधो भव ॥ १ ॥ ॐभूर्भुवःस्वः सोम इहागच्छ ॥ आप्यायस्वेति ऋक् ॥ आप्यायस्वसमेतुतेव्विश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥१२॥ इयमेव इतियजुः ॥ चंद्रमाआऋचा इति साम ॥ इमंदेवाअसपत्नमिति स्थापनम् ॥ इमंदेवाअसपत्नᳬसुबद्धम्महतेक्षत्रायमहते ज्यैष्ठ्यायमहतेजानराज्यायेंद्रस्येंद्रियायं ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यैव्विशएषवोमीराजासोमोस्माकं ब्राह्मणानाᳬराजा ॥१०॥ सोमाय नमः ॥ पाद्यादिभिः सोमं पूजयेत् ॥ अथ नमस्कारः ॥ अत्रिपुत्र निशानाथ द्विजराज निशाकर ॥ सोम त्वं सौम्यभावेन ग्रहपीडां निराकुरु ॥१॥ ततः प्रार्थना ॥ अत्रिपुत्र नमस्तेस्तु नमस्ते शशलांछन ॥ श्वेतांबर नमस्तेस्तु ताराधिप नमोस्तु ते ॥ २ ॥ सावित्र्यै नमः ॥ अमृतकलायै नमः ॥ विजयायै नमः ॥ पश्चिमसंध्यायै नमः ॥ इति कलापूजनम् ॥ अथ निर्ऋतिपश्चिमयोर्मध्यस्तंभपूजा ॥ आवाहयामि देवेशं सलिलस्याधिपं प्रभुम् ॥ शंखपाशधरं सौम्यं वरुणं यादसां पतिम् ॥ कुंभारथसमारूढं मणिरत्नसमन्वितम् ॥ आगच्छ देव वरुण स्तंभेऽस्मिन्सन्निधो भव ॥ १ ॥ ॐभूर्भुवःस्वः वरुण

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





इहागच्छ ॥ तत्त्वायामीति ऋक् ॥ तत्त्वायामिब्रह्मणावंदमानुस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ २१ ॥ इमंमेवरुणेति यजुः ॥ इमंमेवरुणश्रुधीहवमद्याचं मृडय ॥ त्वामवस्युराचके ॥१॥ यदाकदाइति यजुः ॥ तत्त्वायामीति स्थापनम् ॥ तत्त्वायामिब्रह्मणावंदमानुस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसुमानआयुःप्रमोषीः ॥ २ ॥ वरुणायनमः ॥ पाद्यादिभिः वरुणं पूजयेत् ॥ अथ नमस्कारः ॥ वरुणाय नमस्तेस्तु नमः स्फटिकदीप्तये ॥ नमस्ते श्वेतहाराय जलेशाय नमोनमः ॥ १ ॥ ततः प्रार्थना ॥ शंखस्फटिकवर्णाभ श्वेतहारांबरावृत ॥ पाशहस्त महाबाहो दयां कुरु दयानिधे ॥ २ ॥ वारुण्यै नमः ॥ पाशधारिण्यै नमः ॥ बृहस्पतये नमः ॥ अथ पश्चिमवायव्यांतरालस्तंभपूजा ॥ तत्राष्टवसूनावाहयेत् ॥ ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानिलोऽनलः ॥ प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १ ॥ आवाहयामि देवेशान्वसूनष्टौ महाबलान् ॥ सौम्यमूर्तिधरान्देवान्दिव्यायुधकरान्वितान् ॥ २ ॥ शुद्धस्फटिकसंकाशान्नानावसुविराजितान् ॥ अश्वारूढान्दिव्यवस्त्रान्सर्वालंकारभूषितान् ॥ आवाहयामि स्तंभेस्मिन्वसूनष्टौ सुखावहान् ॥ ३ ॥ भूर्भुवःस्ववर्सव इहागच्छत ॥ सुगावो देवा इति ऋक्॥ सुगावोदेवाःसदनाअकर्म्मयआजुगमेदꣳसवनंजुषाणाः॥ भरमाणावहमानाहवीꣳष्यस्मेधन्तवसवोवसूनिस्वाहा ॥ ८ ॥ वसवस्त्वाकृण्वंतु इति यजुः ॥ वसवस्त्वाकृण्वंतुगायत्रेणछंदसांगिरस्वद्ध्रुवासिपृथिव्यसिधारयामयिप्रजाꣳरायस्पोषंगौपत्यꣳसुवीर्य्यꣳसजातान्यजमानायरुद्रास्त्वाकृण्वंतुत्रैष्टुभेनछंद



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सांगिरस्वद्ध्रुवास्यंतरिंक्षमसिधारयामयिप्रजाꣳरायस्पोषंङ्गौपत्यꣳसुवीर्य्यꣳसजातान्यजंमानायादित्यास्त्वांकृण्वंतुजागंते
नुछंदंसाङ्गिरस्वद्ध्रुवासिद्यौरंसिधारयामयिप्रजाꣳरायस्पोषंङ्गौपत्यꣳसुवीर्य्यꣳसजातान्यजंमानायविश्वत्वादेवावैश्वानु
राः कृंण्वन्त्वानुष्टुंभेनुच्छंदसाङ्गिरस्वद्ध्रुवासिदिशोंसिधारयामयिप्रजाꣳरायस्पोषंङ्गौपत्यꣳसुवीर्य्यꣳसजातान्यजंमानाय
॥१०॥इदं वसाउ इति साममंत्रः ॥ वसोः पवित्रमितिमंत्रेणाष्टवसूनां स्थापनम्॥ वसोंःपवित्रंमसिशुतधांरंवसोंः पवित्रंमसिसुहस्त्रं
धारम् ॥ देवस्त्वांसवितापुंनातुवसोंः पवित्रेंणशुतधांरेणसुप्वाकामंधुक्षः॥१॥वसुभ्योनमः ॥ इति पाद्यादिभिः वसून्पूजयेत् ॥ अथ
नमस्कारः ॥ नमस्करोमि देवेशान्नानावसुविराजितान् ॥ शुद्धस्फटिकसंकाशान्दिव्यायुधकरान्वसून् ॥ १ ॥ ततः प्रार्थना ॥
दिव्यवस्त्रा दिव्यदेहाः पुष्पमालाविभूषिताः ॥ वसवोष्टौ महाभागा वरदाः संतु मे सदा ॥२॥ विनतायै नमः ॥ अणिम्ने नमः ॥
भूत्यैनमः ॥ गरिम्णे नमः ॥ अथ वायव्यकोणे स्तंभपूजा ॥ आवाहयामि देवेशं धनदं पदपूजितम् ॥ महाबलं दिव्यदेहं नरयान
गतं विभुम् ॥ दिव्यमालांबरधरं गदाहस्तं महाभुजम् ॥ आगच्छ यक्षराज त्वं स्तंभेस्मिन्सन्निधो भव ॥ भो धनदं इहागच्छ ॥
सोमोधेनुमिति ऋक् ॥ सोमो धेनुꣳसोमोअर्वंतमाशुꣳसोमोंवीरङ्कर्म्मण्यं ददाति ॥ सादन्यं विदत्थ्यꣳसभेयंपितृश्रवणं
य्योददांशदस्मै ॥ ३४ ॥ इदमेव यजुः ॥ हꣳस इति साम ॥ ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोतांवेदिषदतिंथिर्दुरोणसत् ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नृषद्वरसदृतसद्यो मुसदुब्जागोजाऋतजाअद्रिजाऋतंबहत् ॥१०॥ ॐवयꣳसोमव्रते इत्यनेन स्थापनम् ॥ ॐवुयꣳसोम व्रतेतव मनंस्तनूषुबिभ्रतः ॥ प्रजावंतः सचेमहि ॥३॥ धनदाय नमः ॥ पाद्यादिभिः धनदं पूजयेत् ॥ अथ नमस्कारः ॥ यक्षराज नमस्तेऽस्तु नमस्ते नरयानग ॥ पीतांबर नमस्तेऽस्तु गदापाणे नमोस्तु ते ॥१॥ ततः प्रार्थना ॥ दिव्यदेह धनाध्यक्ष पीतांबर गदाधर ॥ उत्तरेश महाबाहो वाञ्छितार्थफलप्रद ॥ २ ॥ अदित्यै नमः ॥ लविन्यै नमः ॥ सिनीवाल्यै नमः ॥ अथ वायव्योत्तरयोरंतराले स्थितस्य स्तंभस्य पूजा ॥ आवाहयामि देवेशं गुरुं त्रिदशपूजितम् ॥ हेमगोरोचनावर्णं पीनस्कंधं सुवक्षसम् ॥ शंख च कलशं चैव पाणिभ्यामिह बिभ्रतम् ॥ बृहस्पते समागच्छ स्तंभेऽस्मिन्सन्निधो भव ॥ १ ॥ बृहस्पते इहागच्छ ॥ इंद्रआसांनेता इति ऋक् ॥ इंद्रं आसांनेताबृहस्पतिर्दक्षिणायुज्ञः पुरएंतुसोमः ॥ देवसेनानामभिभञ्जतीनांजयंतीनाम्मुरुतों यंत्वग्रंम् ॥ १७ ॥ बृहस्पतेअतियदर्य्य इति यजुः ॥ बृहस्पतेऽअति यदुर्य्योअर्हाद्युमद्विभातिक्रतुमुज्जनेषु ॥ यद्दीदयच्छवंसऽऋतप्रजाततदुस्म्मासुद्रविणंधेहिचित्रम् ॥ उपयामगृंहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा ॥ २६ ॥ अर्यमणंबृहस्पतिमित्यनेन मंत्रेण बृहस्पतेः स्थापनम् ॥ बृहस्पतये नमः पाद्यादिभिः बृहस्पतिं पूजयेत ॥ अथ नमस्कारः ॥ ब्रह्मपुत्र नमस्तेस्तु पीतध्वज नमोस्तु ते ॥ त्रिदशार्चित देवेश सिंधूद्भव नमोऽस्तु ते ॥ १ ॥ ततः प्रार्थना ॥ पूजितोसि यथाशक्त्या दंडहस्त बृहस्पते ॥ क्रूरग्रहाभिभूतस्य शांतिं देवगुरो कुरु ॥ २ ॥ पूर्णमास्यै नमः ॥ सावित्र्यै नमः ॥ अथ उत्तरेशानयोरंतराले



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्थितस्य स्तंभस्य पूजा ॥ आवाहयामि देवेशं विश्वकर्माणमीश्वरम् ॥ मूर्त्तामूर्तकरं देवं सर्वकर्त्तारमीश्वरम् ॥ त्रैलोक्यसूत्रकर्त्तारं द्विभुजं सर्वदर्शिनम् ॥ आगच्छ विश्वकर्मंस्त्वं स्तंभेऽस्मिन्सन्निधो भव ॥ १ ॥ ॐभूर्भुवःस्वः विश्वकर्मन् इहागच्छ ॥ विश्वकर्मन्हविषा इति ऋक् ॥ ॐविश्वकर्म्मन्हविषाव्वर्द्धनेनत्रातारमिंद्रं मकृणोरवद्धयम् ॥ तस्मैव्विशःसमनमंत पूर्व्वीरयमुग्रोव्विहव्योयथासंत् ॥ १७ ॥ इदमेव यजुः ॥ उपयामगृंहीतोसीति स्थापनम् ॥ उपयामगृंहीतोसींद्रांयत्वाव्विष्वर्कर्मणएषतेयोनिरिंद्रांयत्वाव्विश्वकंर्म्मणे ॥ ८ ॥ विश्वकर्मणे नमः ॥ विश्वकर्माणं पाद्यादिभिः पूजयेत् ॥ अथ नमस्कारः ॥ नमामि विश्वकर्माणं द्विभुजं सर्वदर्शिनम् ॥ त्रैलोक्यसूत्रकर्त्तारं महाबलपराक्रमम् ॥ १ ॥ ततः प्रार्थना ॥ प्रसीद विश्वकर्मंस्त्वं शिल्पिशास्त्रविशारद ॥ सदंडपाणे द्विभुज तेजोमूर्तिधर प्रभो ॥ २ ॥ सिनीवाल्यै नमः ॥ वास्तुदेवतायै नमः ॥ सावित्र्यै नमः ॥ ततः पुष्पांजलिं गृहीत्वा ॥ अघोरेभ्योथघोरेभ्योघोरघोरंतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्योनमस्ते अस्तुरुद्ररूपेभ्यः ॥ इति मंत्रेण मंडपे पुष्पांजलिं विकिरेत् ॥ इति षोडशस्तंभपूजा ॥ ॐनागमात्रे नमः ॥ इति बलिकाकाष्टानि पूजयेत् ॥ ॐनमः सर्वेभ्यः ॥ इति शाखोद्बंधनानि पूजयेत् ॥ ततः पश्चिमद्वारेण निर्गत्य पूर्वदिक्प्रभृतिद्वारतोरणपूजामारभेत् ॥ अथ द्वारतोरणपूजा ॥ मंडपस्य पुरद्वाराद्धस्तमात्रोपरिन्यस्ततोरणस्य पार्श्वे यथाविधिना कलशद्वयं संस्थाप्य कयानश्चित्र इति मंत्रेण तत्र राहुमावाहयेत् ॥ कयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॥ २९ ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





बृहस्पते अतियदर्य इति मंत्रेण बृहस्पतिमावाहयेत् ॥ बृहस्पतेऽअतियदुर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयुच्छवसऽऋतप्रजाततदस्म्मासुद्रविणंधेहिचित्रम् ॥ उपयामगृहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्प्पतयेत्वा ॥ २६ ॥ बृहस्पतये नमः ॥ राहवे नमः ॥ इति चंदनादिभिः संपूज्य कलशे ध्रुवाद्यौरिति मंत्रेण ध्रुवमावाहयेत् ॥ ध्रुवाय नमः ॥ इति ध्रुवं पूजयेत् ॥ अथ पूर्वद्वारतोरणस्यावाहनम् ॥ प्राचीं दिशं समाश्रित्य सुदृ॑ नाम तोरणम् ॥ महावीर्यं महाकायमिंद्रायुधसमप्रभम् ॥ अस्मिन्महोत्सवे यज्ञे क्रतूनां प्रवरे शुभे ॥ एह्येहि अश्वत्थ ऋग्वेदाधिष्ठित इंद्रदैवत्य महातोरण एनं यज्ञं रक्ष सर्वविघ्नान्निवारय ॥ अथ तोरणध्यानम् ॥ पूर्वस्यां दिशि यज्ञस्य सुदृढं नाम तोरणम् ॥ शुक्लवस्त्रपरिच्छन्नं शुक्लमाल्यविभूषितम् ॥ महावीर्यं महाकायं सिंदूरसदृशं प्रभुम् ॥ इति ध्यात्वा सुदृढतोरणाय नमः ॥ इति पाद्यादिभिः पूजनम् ॥ ततः कृतयुगाय नम इति कृतयुगमावाह्य पूजयेत् ॥ अग्निमीळे इति मंत्रेण ऋग्वेदमावाह्य पूजयेत् ॥ अग्निमीळे पुरोहितंयज्ञस्य देवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ ऋग्वेदः पद्मपत्राक्षो गायत्र्यः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक्त्वं मे मखे भवेति ध्यानम् ॥ दक्षिणशाखायां धात्रे नमः ॥ इत्यावाह्य पूजयेत् ॥ उत्तरशाखायां विधात्रे नमः ॥ इत्यावाह्य पूजयेत् ॥ उर्ध्वं गणेशाय नमः ॥ इत्यावाह्य पूजयेत् ॥ अधो देहल्यां द्वारश्रियै नमः ॥ इत्यावाह्य पूजयेत् ॥ देहलीमध्यभूमौ वास्तुपुरुषाय नमः ॥ इति वास्तुपुरुषमावाह्य पूजयेत् ॥ तत्रैव त्रातारमितिमंत्रेणेंद्रमावाह्य



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पूजयेत् ॥ ॐत्रातारमिंद्रमवितारमिंद्रᳫं हवेहवेसुहवᳫं शूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रᳫं स्वस्तिनो मघवाधात्विंद्रः ॥ २० ॥ अथ त्रिशूलपूजा ॥ मंगलाभिधत्रिशूलाय विष्णुदैवताय नमः ॥ इदं विष्णुरितिमंत्रेण विष्णुमावाह्य पूजयेत् ॥ इदं विष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाᳫंसुरेस्वाहा ॥ ६ ॥ अथ त्रिशूलशृंगेषु प्रदक्षिणक्रमेण देवतान्यासः ॥ प्रथमे शृंगे इंद्रं द्वितीये शृंगे धातारं तृतीये शृंगे भगम् ॥ एवं संपूज्य प्रार्थयेत् ॥ पूजयामीह देवेश शिवो भव वरप्रद ॥ रिपून्निवारयाशु त्वं यज्ञरक्षाकरो भव ॥ इति पूर्वतोरणपूजा ॥ अथ दक्षिणतोरण पूजा ॥ तत्र कलशं संस्थाप्य तत्र स्योनापृथिवीतिमंत्रेण पृथिवीमावाह्य पृथिव्यै नमः ॥ इति पूजयेत् ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ ३६ ॥ आकृष्णेनेति सूर्यमावाह्य पूययेत् ॥ ॐआकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यं च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ३३ ॥ अग्निर्मूर्द्धादिव इति मंत्रेण मंगलमावाह्य पूजयेत् ॥ ॐअग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳫं रेताᳫंसिजिन्वति ॥ इंद्रस्यत्वौजसासादयामि ॥ १३ ॥ अथ तोरणध्यानम् ॥ दक्षिणां दिशमाश्रित्य विकटं नाम तोरणम् ॥ महावीर्यं महाकायं भिन्नांजनसमप्रभम् ॥ एह्येह्यस्मिन्नौदुंबरतोरण यज्ञं रक्ष सर्वविघ्नान्निवारय इत्यावाह्य इषेत्वेति मंत्रेण तोरणमालभ्य विकटतोरणाय नम इति पूजयेत् ॥ इषेत्वोर्ज्जेत्वावायवस्थदेवोवः सविताप्रार्प्पयतश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइंद्रायभा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



गंप्रजावंतीरनमीवाऽअंयक्ष्मामावंस्तेनऽईंशतमाघशंᳫंसोद्ध्रुवाऽअस्मिन्गोपंतौस्यातबह्वीर्य्यजंमानस्यपशून्पाहि ॥ १ ॥ विध्यांद्रये नमः ॥ त्रेतायुगाय नमः ॥ यमायत्वेति मंत्रेण यममावाह्य पूजयेत् ॥ ॐयमायंत्वामखायंत्वांसूर्य्यस्यत्वात पंसे ॥ देवस्त्वांसवितामद्ध्वांनक्तुपृथिव्याःसᳫंस्पृशस्पाहि ॥ अर्च्चिरसिशोचिरसितपोसि ॥ ३७ ॥ दक्षिणशाखायां धात्रे नमः ॥ वामशाखायां विधात्रे नमः ॥ उत्तरांगे गणेशाय नमः ॥ अधोदेहल्यां द्वारश्रियै नमः ॥ देहलीमध्यभूमौ वास्तु पुरुषाय नमः ॥ अथ त्रिशूलपूजा ॥ शत्रुघ्ननाम्ने रुद्रदैवताय त्रिशूलाय नमः ॥ मानस्तोकइतिमंत्रेण रुद्रमावाह्य पूजयेत् ॥ ॐमानस्तोकेतनयेमानऽआयुंषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥ मानोंव्वीरान्रुद्रभामिनोंव्वधीर्हविष्म्मंतःसदमित्वाहवामहे॥ ॥ १६ ॥ त्रिशूलशृंगेषु प्रदक्षिणक्रमेण पूष्णे नमः ॥ मित्राय नमः ॥ वरुणाय नमः ॥ इत्यादित्यन्यासः ॥ एवं संपूज्य प्रार्थयेत् ॥ वृषस्कंधसमारूढ शूलहस्त वरप्रद ॥ यज्ञघ्नान्वारयाशु त्वं पूजितोसि मया प्रभो ॥ इति दक्षिणतोरणपूजा ॥ अथ पश्चिमद्वारतोरणपूजा ॥ तत्र कलशद्वयं संस्थाप्य अन्नात्परिश्रुत इतिमंत्रेण प्रथमकलशे शुक्रमावाह्य पूजयेत् ॥ अन्नांत्परिस्रुतोरसंब्रह्मंणाव्व्यपिबत् क्षत्रंपयःसोमंप्रजापतिः ॥ ऋतेनसत्यमिंद्रियंव्विपानंᳫंशुक्रमंधंसऽइंद्रस्येंद्रियमिदंपयो मृतंमधुं ॥ १८ ॥ उद्बुध्यस्व इतिमंत्रेण द्वितीये कलशे बुधमावाह्य बुधं पूजयेत् ॥ उद्बुंद्ध्यस्वाग्नेप्रतिंजागृहित्वमिंष्टापूर्त्ते सᳫंसृंजेथामयंच ॥ अस्मिन्त्सधस्थेऽअद्ध्युत्तंरस्मिन्विश्श्वेदेवायजंमानश्चसीदत ॥ १९ ॥ अथ ध्यानमावाहनं च ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

प्रतीचीं दिशमाश्रित्य सुभीमं नाम तोरणम् ॥ महावीर्यं महाकायं सुवर्णसदृशप्रभम् ॥ एह्येहि सामवेदाधिष्ठित प्लक्ष तोरण वरुणदैवत्य एनं यज्ञं रक्ष सर्वविघ्नान्निवारय ॥ अग्नआयाहीतिमंत्रेण तोरणालंभः ॥ अग्नऽआयाहिवीतये गृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ भीमाख्यतोरणाय नमः ॥ पाद्यादिभिः तोरणं पूजयेत् ॥ इति पूजनम् ॥ हेमकूटाचलाय नमः ॥ द्वापरयुगाय नमः ॥ दक्षिणशाखायां विधात्रे नमः ॥ वामशाखायां विधात्रे नमः ॥ उत्तरांगे गणेशाय नमः ॥ अधोदेहल्यां द्वारश्रियै नमः ॥ देहलीमध्ये वास्तुपुरुषाय नमः ॥ अथ त्रिशूलपूजा ॥ पुत्रप्रदाभिधब्रह्मदैवताय त्रिशूलाय नमः ॥ त्रिशूलशृंगेषु प्रदक्षिणक्रमेण आदित्यान्पूजयेत् ॥ ॐ अर्यम्णे नमः ॥ ॐ अंशवे नमः ॥ ॐ विवस्वते नमः ॥ ब्रह्मजज्ञानमितिमंत्रेण ब्रह्माणमावाह्य पूजयेत् ॥ ॐब्रह्मजज्ञानं प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ १३ ॥ एवं ब्रह्माणं संपूज्य प्रार्थयेत् ॥ हंसपृष्ठसमारूढ कमंडलुधर प्रभो ॥ यज्ञविघ्नान्वारयाशु त्वं पूजितोसि मया प्रभो ॥ इति पश्चिमतोरणपूजा ॥ अथोत्तरतोरणपूजा ॥ तत्र कलशद्वयं संस्थाप्य प्रथमकलशे इमंदेवा इतिमंत्रेण सोममावाह्य पूजयेत् ॥ इमंदेवाऽअसपत्नꣳसुवद्ध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएषवोमीराजासोमोस्माकं ब्राह्मणानाꣳराजा ॥ १० ॥ द्वितीये कुंभे शन्नोदेवीरितिमंत्रेण शनिमावाह्य पूजयेत् ॥ ॐशन्नोदेवीरभिष्टयऽआपो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



भवंतुपीतये ॥ शँय्योरभिस्रवंतुनः ॥ ३६ ॥ अथ तोरणध्यानमावाहनं पूजनं च ॥ उत्तरां दिशमाश्रित्य सुप्रभं नाम तोरणम् ॥ महावीर्यं महाकायं शुद्धस्फटिकसन्निभम् ॥ एह्येह्यथर्वाधिष्ठित न्यग्रोधतोरण सोमदैवत एनं यज्ञं रक्ष सर्वविघ्नान्निवारय ॥ शन्नोदेवीतिमंत्रेणतोरणालंभः ॥ ॐशन्नोदेवीरभिष्टयऽआपो भवंतुपीतये ॥ शँय्योरभिस्रवंतुनः ॥ ३६ ॥ सुप्रभतोरणाय नमः ॥ इति पाद्यादिभिः संपूजयेत् ॥ इति पूजनम् ॥ हिमाचलाय नमः ॥ कलियुगाय नमः ॥ सोमाय नमः ॥ दक्षिणशाखायां धात्रे नमः ॥ वामशाखायां विधात्रे नमः ॥ उत्तरांगे गणेशाय नमः ॥ अधोदेहल्यां द्वारश्रियै नमः ॥ देहलीमध्ये वास्तुपुरुषाय नमः ॥ अथ त्रिशूलपूजा ॥ उत्तमनाम्ने सोमदैवताय त्रिशूलाय नमः ॥ त्रिशूलशृंगेषु प्रदक्षिणक्रमेण सोममावाह्य पाद्यादिभिः पूजयेत् ॥ ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतंबृहत् ॥ १० ॥ एवं संपूज्य प्रार्थयेत् ॥ नरयानसमारूढ गदाहस्त वरप्रद ॥ विघ्नान्निवारयाशु त्वं पूजितोसि मया प्रभो ॥ देवास्तोरणरूपेण संस्थिता यज्ञमंडले ॥ विघ्नविध्वंसनार्थं वै रक्षार्थं त्वध्वरस्य च ॥ इति संप्रार्थ्य नमस्कुर्यात् ॥ इति तोरणपूजा ॥ अथ सदिक्पालद्वारपूजा ॥ अथ पूर्वद्वारदेवतावाहनम् ॥ आयाहि वज्रसंघात पूर्वद्वारं कृपाधिप ॥ ऋग्वेदाधिपते नाम्ना सुशोभन नमोऽस्तु ते ॥ द्वारशाखयोर्ध्रुवमध्वरं चेति वसुद्वयमावाह्य पूजयेत् ॥ शृंगेषु शाखयोश्च वस्त्राणि बद्ध्वा शाखामूलयोर्धान्यपुंजोपरि वारिपूर्णौ प्रशांतशिशिरनामानौ जातबीजांकुर



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शरावपिहितौ कलशौ आजिघ्रेतिमंत्रेण प्रतिष्ठाप्य गंधादिना पूजयेत् ॥ द्वारदेशे इंद्रमावाह्य पूजयेत् ॥ इंद्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ॥ स तु यज्ञाधिपो देवस्तस्मै नित्यं नमोनमः ॥ इंद्रयाहिचित्रभानो इति मंत्रेण पीतां पताकां पीतं ध्वजं च आलभ्य त्रातारमिंद्रमितिमंत्रेण तोरणोपरि निधानम् ॥ इंद्रायाहिचित्रभानोसुताऽइमेत्त्वायवं÷ ॥ अण्वींभिस्तनांपूतासं÷ ॥ २० ॥ ॐत्रातारमिंद्रमवितारमिंद्र छं हवेहवेसुहव छं शूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्र छं स्वस्तिनो मघवांधात्विंद्रं÷ ॥ २० ॥ योमेदंडइति सर्वत्र दंडोच्छ्रयणम् ॥ योमेदंडः परापतद्वैहायसोधिभूम्याम् ॥ तमहंपुनरादद आयुषेब्रह्मणेब्रह्मवर्च्चसाय ॥ सुमंगलनाम्ने गणेशाय पूर्वद्वाराधिष्ठिताय नमः ॥ शाखयोर्गंगायै नमः ॥ यमुनायै नमः ॥ द्वारशाखयोरेव भूर्लोकाय नमः ॥ भुवर्लोकाय नमः ॥ आदित्याय नमः ॥ सोमाय नमः ॥ दक्षिणशाखायां धात्रे नमः ॥ वामशाखायां विधात्रे नमः ॥ उत्तरांगे गणेशाय नमः ॥ अधोदेहल्यां द्वारश्रियै नमः ॥ देहलीमध्ये वास्तुपुरुषाय नमः ॥ ध्वजे कुमुदाय नमः ॥ पताकायां हैतुकाय नमः ॥ क्षेत्रपालाय नमः ॥ तत्रैव ब्रह्मणे नमः ॥ रुद्राय नमः ॥ देवेभ्यो नमः ॥ सिद्धेभ्यो नमः ॥ विद्याधरेभ्यो नमः ॥ पन्नगेभ्यो नमः ॥ द्वारशाखयोर्नंदिने नमः ॥ महाकालाय नमः ॥ इति द्वारयोः ॥ एवं द्वारं संपूज्य द्वारस्थितकलशे द्वारे वा इंद्रमावाहयेत् ॥ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरो महेशः ॥ संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ भो इंद्र इहागच्छ इहतिष्ठ ॥ इत्यावाह्य ॐइंद्रंपरेवंरेमध्यमासुः इंद्रंयांतोवं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



सितासुइंद्रम् ॥ इंद्रं क्षिप्रंतं उतयुद्धचंमाद्दाःइन्नरोंवाजुयंतोंहवंते ॥ इत्यनेन इंद्रसन्निधानम् ॥ ततः त्रातारमिंद्रमितिमंत्रेण इंद्रायसामगायत इतिमंत्रेण वा इद्रस्य सर्व्वोपचारैः पूजनम् ॥ ॐत्रातारमिंद्रमवितारमिंद्रᳪंहवेहवेसुहवᳪंशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रᳪंस्वस्तिनोमघवाधात्विंद्रः ॥ २० ॥ इंद्रायसामंगायतविप्रायबृहतेबृहत् ॥ धर्म्मकृते विपश्चिते पनस्यवे ॥ अथ बलिदानम् ॥ इंद्राय सांगाय सपरिवाराय सशक्तिकाय इमं घृतौदनबलिं समर्पयामि ॥ भो इंद्र अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य गृहे आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता पुष्टिकर्ता वरदो भव ॥ इति बलिं समर्प्य आचमेत् ॥ अथ नमस्कारः ॥ इंद्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ॥ शतयज्ञाधिपो देवस्तस्मै नित्यं नमोनमः ॥ इति नत्वा प्रार्थयेत् ॥ शचीपते गजारूढ वज्रहस्त सुराधिप ॥ पूर्वावकाशे युष्माभी रक्षणीयं प्रयत्नतः ॥ इति प्रार्थनम् ॥ अग्निमीळे इतिमंत्रेण ऋग्वेदमावाह्य पूजयेत् ॥ ॐअग्निमीळे पुरोहितं यज्ञस्यदेवमृत्विजम् ॥ होतांररत्नधातमम् ॥ १ ॥ ऋग्वेदः पद्मपत्राक्षो गायत्र्यः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भवेति ध्यानम् ॥ ऋग्वेदप्रतिनिधित्वेन ऋग्वेदीयं ब्राह्मणं गंधादिना पूजयेत् ॥ तत्र पूर्वद्वारि ॥ श्रीसूक्तं पावमानं च सोमसूक्तं च मंगलम् ॥ पौरुषं रुद्रसूक्तं च वामदेव्यं तथैव चेति ॥ ब्राह्मणद्वयकर्तृको द्वारपालजपः ॥ इति पूर्वद्वारपूजा ॥ अथाग्नेयकोणे गत्वा तत्र कलशं संस्थाप्य पुंडरीकाय नम इति संपूज्य ॥ छागस्थमग्निं रक्तवर्णं ध्यात्वा कलशे आवाहयेत् ॥ एह्येहि सर्वामरहव्यवाह मुनिप्रवर्यैरभितोभिजुष्ट ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तेजोनिधे लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते ॥ भो अग्न इहागच्छेह तिष्ठेत्यावाह्य ॥ अग्निस्तिग्मेतिमंत्रेण अग्निं प्रपूजयेत् ॥ ॐ अ॒ग्निस्ति॒ग्मेनं॑शो॒चिषा॒यासु॒द्विश्श्व॒न्न्य॒त्रिणं॑म् ॥ अ॒ग्निर्न्नो॑वनते॒ऽरयिम् ॥ १७ ॥ अथ नमस्कारः ॥ सर्वदेवमयो देवो रक्तो वह्निर्महाबलः ॥ सप्तजिह्वो महावीर्यस्तस्मै नित्यं नमोनमः ॥ आग्नेय पुरुषो रक्तः सर्वदेवमयोऽव्ययः ॥ धूम्रकेतुरजोध्यक्षस्तस्मै नित्यं नमोनमः ॥ इति नमेत् ॥ ततः अग्नआयाहीतिमंत्रेण रक्तध्वजपताकालंभः ॥ त्वन्नोअग्ने इतिमंत्रेण ध्वजपताकोच्छ्रायः ॥ अग्न॒ऽआया॑हिवी॒तये॑ गृणा॒नोह॒व्यदा॑तये ॥ निहोतासत्सि ब॒र्हिषि॑ ॥ १ ॥ त्वन्नो॑ऽअग्ने॒व्वरु॑णस्यवि॒द्वान्दे॒वस्य॒हेडो॒ऽअव॑यासिसीष्ठाः ॥ यजि॑ष्ठो॒व्वह्नि॑तमः॒शोशु॑चानो॒व्विश्श्वा॒द्वेषा॑ᳪंसि प्प्रमु॒मुग्ध्य॒स्म्मत् ॥ २१ ॥ धामंते इतिमंत्रेण ध्वजपताकयोः पूजनम् ॥ धामं॑ते॒व्विश्श्वं॒भुव॑न॒मधि॑श्रि॒तम॒न्तः स॑मु॒द्रे॒हृद्य॒न्तरायु॑षि ॥ अ॒पाम॒नी॑केसमि॒थेय॒ऽआभृ॑त॒स्तम॑श्यामु॒मधु॑मंतं॑त॒ऽऊ॒र्म्मिम् ॥ १७ ॥ ध्वजे कुमुदाय नमः ॥ योमेदंडइतिमंत्रेण दंडालंभः ॥ त्रिपुरघ्नाय क्षेत्रपालाय नमः ॥ नमस्ते त्वग्निरूपाय पिंगलाय महात्मने ॥ चंडाय चंडरूपाय रक्ष त्वं हव्यवाहन ॥ इति नत्वा अग्निंदूतमितिमंत्रेण घृतोदनबलिदानम् ॥ अ॒ग्निंदू॒तंपु॒रोद॑धेहव्य॒वाह॒मुप॑ब्रुवे ॥ दे॒वाँ२ऽआसा॑दयादि॒ह ॥ २२ ॥ अग्नये सांगाय इमं बलिं समर्पयामि ॥ भो अग्ने दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य गृहे आयुःकर्त्ता क्षेमकर्ता तुष्टिकर्त्ता पुष्टिकर्ता वरदो भवेत्त्युक्त्वा आचम्य दक्षिणद्वारं पूजयेत् ॥ इत्याग्नेयकोणपूजा ॥ अथ दक्षिणद्वारपूजा ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नमस्ते धर्मराजाय त्रेतायुगाधिपाय च ॥ यजुर्वेदाधिदेवाय सुभद्रद्वाररक्षिणे ॥ इत्यनेन द्वारदेवतावाहनम् ॥ धर्मिष्ठाभिधाय श्रीधात्र्यधिष्ठिताय दक्षिणद्वाराय नमः ॥ शाखयोर्वस्त्राणि बद्ध्वा शाखामूलयोर्धान्यपुंजोपरि पर्जन्याशोकनामानौ कलशौ पूर्ववत्संस्थाप्य पाद्यादिभिः पूजयेत् ॥ तत्रैव वामनाय नमः ॥ गोदावर्यै नमः ॥ कृष्णायै नमः ॥ रुद्राय नमः ॥ द्वारशाखयोः महर्लोकाय नमः ॥ भौमाय नमः ॥ बुधाय नमः ॥ ऊर्ध्वं यजुर्वेदाय नमः ॥ दक्षिणशाखायाम् ॥ चंडाय नमः ॥ वामशाखायां प्रचंडाय नमः ॥ तत्रैव धात्रे नमः ॥ विधात्रे नमः ॥ उत्तरांगे गणपतये नमः ॥ अधो देहल्याम् ॥ द्वारश्रियै नमः ॥ देहलीमध्ये वास्तुपुरुषाय नमः ॥ तत्रैव गायत्र्यै नमः ॥ श्रियै नमः ॥ सरस्वत्यै नमः ॥ दक्षिणवामशाखयोः गणेशाय नमः ॥ वृषभाय नमः ॥ आग्नेयां स्वक्षेत्रपालायनमः ॥ एवं द्वारं संपूज्य द्वारदेशे यमं श्यामदंडहस्तं महिषारूढं ध्यात्वा आवाहयेत् ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्त्ते ॥ शुभाशुभानंद शुचामधीश रक्षाध्वरं नो भगवन्नमस्ते ॥ भो यम इहागच्छेह तिष्ठेत्यावाह्य यमायत्वेतिमंत्रेण यमं सर्वोपचारैः पूजयेत् ॥ युमायंत्वामुखायत्वासूर्य्यस्यत्वातपंसे ॥ देवस्त्वांसविताम‍द्ध्वांनक्तु पृथिव्या॑सᳯस्पृशस्पाहि ॥ अुर्च्चिरंसिशुोचिरंसिुतपोंसि ॥ ३७ ॥ अनेनैव मंत्रेण श्यामध्वजपताकालंभः ॥ यमायत्वांगिरस्वते इतिमंत्रेण तोरणोपरिनिधानम् ॥ ॐयुमायुत्वाङ्गिरस्वतेपितृमतेस्वाहां ॥ स्वाहांघुर्म्मायुस्वाहांघुर्म्मः॑ पित्रे ॥ ३८ ॥ योमेदंडइति दंडालंभः ॥ योमेदंडःपरापतद्वैहायमोधिभूम्याम् ॥ तमहंपुनरादद आयुषेब्रह्मणे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ब्रह्मवर्च्चसाय ॥ १ ॥ दंडहस्तो यमो देवो धर्मराजो महाबलः ॥ आवाहयेद्धर्मराजं तस्मै नित्यं नमोनमः ॥ इति
नत्वा प्रार्थयेत् ॥ महामहिषमारूढ दंडहस्त महाबल ॥ आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यतामिति प्रार्थ्य सुगन्नः
पंथामितिगृह्यसूत्रमंत्रेण माषभक्तबलिदानम् ॥ सुगंन्नःपंथांप्रदिशन्नऽएहिज्योतिष्मद्धेह्यजुरन्नआयुः ॥ अपैतुमृत्युरमृतंमऽ
आगाद्वैवस्वतोनोऽअभयंकृणोतुस्वाहा ॥ इति पठित्वा यमाय सांगाय सायुधाय सशक्तिकाय इमं बलिं समर्पयामि ॥
इत्युक्त्वा भो यम दिशं रक्ष बलिं भक्ष अस्य यजमानस्य गृहे आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता पुष्टिकर्ता वरदो भवेत्युक्त्वा प्रार्थ
येत् ॥ वैवस्वत महादेव नमस्ते धर्मसाक्षिक ॥ शिवाज्ञापिहितो देव दिशं रक्ष भवानिह ॥ इति संप्रार्थ्य आचमेत् ॥ ततः
इषेत्वेतिमंत्रेण यजुर्वेदं पूजयेत् ॥ इषेत्त्वोर्ज्जेत्वांव्वायवस्थदेवोवं÷सविताप्प्रार्प्पयतुश्रेष्ठंतमायकर्म्मणऽआप्यांयद्धमग्घन्याऽ
इंद्रांयभागंप्रजावंतीरनमीवाऽअंयक्ष्म्मामावंस्तेनऽईशतमाघशंर्ठंसोदध्रुवाऽअस्म्मिन्गोपंतौस्यातबह्वीर्य्यजंमानस्यपशून्पाहि ॥
इति पठित्वा यजुर्वेदप्रतिनिधित्वेन यजुर्वेदीयं ब्राह्मणं गंधादिना पूजयेत् ॥ अथ यजुर्वेदध्यानम् ॥ कातराक्षो यजुर्वेदस्त्रि
ष्टुभो विष्णुदैवतः ॥ काश्यपेयस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भव ॥ इति यजुर्वेदध्यानम् ॥ तत्र–आनोभद्रानुवाकश्च आशुः
शिशानकस्तथा ॥ यद्देवास्त्रीणि च पठेत्ततोऽष्टौ च पुनंतु माम् ॥ इत्याद्यष्ट मंत्रान् पठेत् ॥ ८ ॥ अभिधाअसिसप्तमंत्रान् ॥७॥
दीर्घायुस्त्वेकंमंत्रं पठेत् ॥ १ ॥ आप्यायस्वेति षट् मंत्रान् पठेत् ॥ ६ ॥ नमोस्तुसर्प्पेभ्यस्त्वेकंमंत्रं पठेत् ॥ १ ॥ आकृ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





षणेनेत्येकंमंत्रं प० ॥ १ ॥ नमः शंभवायचेत्येकंमंत्रं प० ॥ १ ॥ अग्निर्देवताइत्यादिमंत्रं प० ॥ १ ॥ त्रातारमिंद्रमित्येकं प० ॥ १ ॥ सोमंराजानमेकं प० ॥ १ ॥ अभयंतेमहाँइंद्रइत्येकं प० ॥ १ ॥ ऋचंवाचं समग्रं पठेत् ॥ अथेमे मंत्राः क्रमेण प्रदर्श्यंते ॥ आनोभुद्राः क्रतंवोयंतुव्विश्श्वतोदंब्धासोऽअपरीतासऽउद्भिदंः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्प्रायुवोरक्षितारोदिवेदिवे ॥ २५ ॥ आशुः शिशानोव्वृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रंदनोनिमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिंद्रंः ॥ १७ ॥ अथ यद्देवाइत्यादयस्त्रयो मंत्राः ॥ यद्देवादेवहेडनंदेवासश्चकृमाव्वयम् ॥ अग्निर्म्मातस्म्मादेनसोव्विश्श्वान्म्मुंचत्वꣳहसः ॥ २० ॥ यदिदिवायदिनक्तमेनाꣳसिचकृमाव्वयम् ॥ व्वायुर्म्मातस्म्मादेनसोव्विश्श्वान्म्मुंचत्वꣳहसः ॥ २० ॥ यदिजाग्ग्रद्यदिस्वप्नऽएनाꣳसिचकृमाव्वयम् ॥ सूर्य्योमातस्मादेनसोव्विश्श्वान्म्मुंचत्वꣳहसः ॥ २० ॥ ॥ १६ ॥ अथ पुनंतुमामित्यादयोष्टौ मंत्राः ॥ पुनंतुमादेवजनाः पुनंतुमनसाधियः ॥ पुनंतुव्विश्वाभूतानि जातवेदः पुनीहिमा ॥ १९ ॥ पवित्रेणपुनीहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूः ॥ऽरनु ॥ १९ ॥ यत्तेपवित्रमर्च्चिषि ॥ अग्नेव्वितमंतरा ॥ ब्रह्मतेनंपुनातुमा ॥१९॥ पवमानसोऽअद्यनः ॥ पवित्रेणव्विचर्षणिः ॥ यःपोतासपुनातुमा ॥ १९ ॥ उभाभ्यां देवसवितः ॥ पवित्रेणसवेन च ॥ मांपुनीहिव्विश्श्वतः ॥१९॥ व्वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोव्वीतपृष्ठाः ॥ तयामदंतःसधमादेषुव्वयꣳस्यामपतयोरयीणाम् ॥ १९ ॥ येसमानाः समनसःपितरोयमराज्ये ॥ तेषां लोकः स्वधानमोयज्ञोदेवेषुक



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ल्प्यताम् ॥ १९ ॥ येसमानाः समनसोजीवाजीवेषुमामकाः ॥ तेषाᳪश्रीर्मयिकल्प्यतामस्मिँल्लोकेशतᳪसमाः ॥ १९ ॥ अथ अभिधाअसि इत्यादयः सप्तमंत्राः ॥ अभिधाऽअसिभुवनमसियंतासि धर्त्ता ॥ सत्वमग्निंवैश्वानरᳪसप्रथसंगच्छस्वाहा कृतः ॥ २२ ॥ स्वगात्वा देवेभ्यःप्रजापतयेब्रह्मन्नश्वंभंत्स्यामि देवेभ्यः प्रजापतयेतेनराद्ध्यासम् ॥ संबधानदेवेभ्यःप्रजापतयेतेनराद्ध्नुहि ॥ २२ ॥ प्रजापतयेत्वाजुष्टंप्रोक्षामीन्द्राग्निभ्यांत्वाजुष्टंप्रोक्षामिवायवेत्वाजुष्टंप्रोक्षामिविश्वेभ्यस्त्वादेवेभ्योजुष्टंप्रोक्षामिसर्वेभ्यस्त्वादेवेभ्योजुष्टंप्रोक्षामि ॥ योऽअर्वंतंजिघाᳪसतितमभ्यमीतिवरुणःपरोमर्त्तः परःश्वा ॥ २२ ॥ अग्नयेस्वाहा सोमायस्वाहापाम्मोदाय स्वाहा सवित्रेस्वाहा ॥ २२ ॥ वायवेस्वाहा विष्णवे स्वाहेंद्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणायस्वाहा ॥ २२ ॥ हिंकाराय स्वाहा हिंकृतायस्वाहा क्रंदतेस्वाहा वक्रंदायस्वाहाप्प्रोथते स्वाहा प्रप्रोथायस्वाहा गंधायस्वाहा घ्घ्रातायस्वाहा निविष्टायस्वाहोपविष्टायस्वाहा संदितायस्वाहा वल्गतेस्वाहा सीनायस्वाहा शयानायस्वाहा स्वपतेस्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धायस्वाहा विजृंभमाणायस्वाहा विचृत्तायस्वाहासᳪहानायस्वाहोपस्थितायस्वाहा अयनायस्वाहा प्रायणायस्वाहा ॥ २२ ॥ यतेस्वाहा धावतेस्वाहोद्द्रावाय स्वाहोद्द्रुतायस्वाहा शूकारायस्वाहा शूकृतायस्वाहा निषण्णायस्वाहोत्थितायस्वाहा जवायस्वाहा बलायस्वाहा विवर्त्तमानायस्वाहाविवृत्तायस्वाहा विधुन्वानायस्वाहा विधूतायस्वाहा शुश्रूषमाणाय स्वाहा शृण्वतेस्वाहेक्षमाणायस्वाहेक्षिताय स्वाहा वीक्षिताय

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





स्वाहा निमेषायस्वाहा यदत्ति तस्मैस्वाहा यत्पिबतितस्मैस्वाहा यन्मूत्रङ्करोतितस्मैस्वाहा कुर्वतेस्वाहा कृतायस्वाहा ॥ २२ ॥
तत्सवितुर्वरेण्यंभर्गो देवस्य धीमहि ॥ धियोयोनः प्रचोदयात् ॥ २२ ॥ अथ दीर्घायुस्तइत्याद्येकमंत्रं प० ॥ दीर्घायुस्तऽओष
धेखनितायस्मै चत्त्वाखनाम्युहम् ॥ अथोत्वंदीर्घायुर्भूत्त्वाशतवल्शाविरोहतात् ॥ १२ ॥ अथ आप्यायस्वेत्यादिषण्मंत्राः ॥
ॐआप्यायस्वसमेतुतेविश्श्वतः सोमवृष्ण्यम् ॥ भवावाजस्य संगथे ॥ १२ ॥ संतेपयाᳬसिसमुयंतुवाजाः संवृष्ण्यान्य
भिमातिषाहः ॥ आप्यायमानोऽअमृतायसोमदिविश्रवाᳬस्युत्तमानिधिष्व ॥ १२ ॥ आप्यायस्वमदितमसोमविश्वेभिरᳬ
शुभिः ॥ भवानः सुप्प्रथस्तमः सखावृधे ॥ १२ ॥ आतेवत्सोमनो यमत्त्परमाच्चित्सधस्थात् ॥ अग्नेत्वाङ्कामयागिरा ॥
॥ १२ ॥ तुब्भ्यंताऽऽङ्गिरस्तमविश्श्वाः सुक्षितयः पृथक् ॥ अग्नेकामायेमिरे ॥ १२ ॥ अग्निः प्प्रियेषुधामसुकामोभूतस्यभ
व्यस्य ॥ सम्राडेकोविराजति ॥ १२ ॥ अथ नमोस्तुसर्प्पेभ्य इति मंत्रः ॥ नमोस्तुसर्प्पेभ्योयेकेच पृथिवीमनु ॥ येऽअंतरिक्षेये
दिवितेभ्यः सर्प्पेभ्योनमः ॥ १३ ॥ अथ आकृष्णेन इत्यादिमंत्रः ॥ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्त्यं
च ॥ हिरण्ययेनसवितारथेन देवोयातिभुवनानिपश्यन् ॥ ३३ ॥ अथ नमः शंभवायचेत्येको मंत्रः ॥ नमः शंभवा
य चमयोभवायचनमः शंकरायचमयस्करायच नमः शिवायचशिवतराय च ॥ १६ ॥ अथाग्निर्देवताइत्यादिमंत्रं प० ॥
अग्निर्देवतावातो देवतासूर्य्यो देवता चंद्रमा देवतावसवोदेवता रुद्रादेवताऽऽदित्यादेवता मरुतो देवताविश्श्वे देवादेवता



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

व्बृहस्पतिर्देवतेंद्रो देवताव्वरुणोदेवता ॥ १४ ॥ अथ त्रातारमिंद्रमित्यादिमंत्रं प० ॥ त्रातारमिंद्रमवितारमिंद्रᳫं हवेहवेसुहवᳫं शूरमिंद्रम् ॥ व्हयामिशक्रं पुरुहूतमिंद्रᳫं स्वस्तिनो मघवाधात्विंद्रः ॥ २० ॥ अथ सोमᳫं राजानमितिमंत्रं प० ॥ सोमᳫं राजानमवसेग्निमन्न्वारभामहे ॥ आदित्यान्न्विष्णुᳫं सूर्य्यंब्रह्माणंचबृहस्पतिᳫं स्वाहा ॥ ९ ॥ अथ महाँइंद्रइति मंत्रं० ॥ महाँइंद्रोवज्रहस्तꣳषोडशीशर्म्मयच्छतु ॥ हंतुपाप्मानंयोस्मान्द्वेष्टि ॥ उपयामगृहीतोसिमहेंद्रायत्त्वैषतेयोनिर्म्महेंद्राय त्वा ॥ २६ ॥ अथ ऋचंवाचमित्यादीन् समग्रांश्चतुर्विंशतिमंत्रान् पठेत् ॥ ऋचंवाचंप्रपद्येमनोयजुः प्रपद्येसामप्प्राणंप्रपद्येचक्षुः श्रोत्रंप्रपद्ये ॥ वागोजः सहौजोमयिप्प्राणापानौ ॥ ३६ ॥ यन्न्मेच्छिद्रंचक्षुषोहृदयस्यमनसोवातितृणंबृहस्पतिर्म्मेतद्दधातु ॥ शन्नो भवतुभुवनस्ययस्प्पतिः ॥ ३६ ॥ ॐभूर्भुवःस्वः तत्सवितुर्व्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्प्रचोदयात् ॥ ३६ ॥ कयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॥ ३६ ॥ कस्त्वासत्त्योमदानाम्मᳫं हिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेव्वसु ॥ ३६ ॥ अभीषुणःसखानामविताजरितॄणाम् ॥ शतंभवास्यूतिभिः ॥ ३६ ॥ कयात्त्वन्नऽऊत्त्याभिप्प्रमंदसेव्वृषन् ॥ कयास्तोतृभ्यऽआभर ॥ ३६ ॥ इंद्रोव्विश्वस्यराजति ॥ शन्नोऽअस्तुद्विपदेशंचतुष्पदे ॥ ३६ ॥ शन्नोमित्रꣳशंव्वरुणꣳशन्नोभवत्वर्य्यमा ॥ शन्नऽइंद्रोबृहस्प्पतिꣳशन्नोऽव्विष्णुरुरुक्रमः ॥ ३६ ॥ शन्नोव्वातः पवताᳫं शन्नस्तपतुसूर्य्यः ॥ शन्नꣳकनिक्रदद्देवꣳपर्ज्जन्न्योऽअभिवर्षतु ॥ ३६ ॥ अहानिशंभवंतुनꣳशᳫं रात्रीःप्प्रतिधीयताम् ॥ शन्नऽइंद्राग्नी

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



भवंतामवाँभिः शन्नऽइंद्रावरुणारातहंव्या ॥ शन्नऽइंद्रापूषणाव्वाजंसातौशमिंद्रासोमांसुविताय शंय्योंः ॥ ३६ ॥ शन्नोंदेवीरभिष्टंयऽआपोंभवंतुपीतयें ॥ शंय्योरभिस्त्रंवंतुनः ॥ ३६ ॥ स्योनापृथिवीनोभवानृक्षरानिवेशंनी ॥ यच्छांनुः शर्म्मंसुप्रथाः ॥३६॥ आपोहिष्ठामंयोभुवस्तानंऽऊुर्ज्जेंदंधातन ॥ महेरणांयुचक्षंसे ॥ ३६ ॥ योवंःशिवतंमोरसस्तस्यं भाजयतेहनंः ॥ उशतीरिंव मातरंः ॥ ३६ ॥ तस्माऽअरंगमामवोयस्यक्षयांयजिन्न्वथ ॥ आपोंजुनयंथाचनः ॥ ३६ ॥ द्यौःशांतिरंतरिंक्षुंशांतिः पृथिवीशांतिरापःशांतिरोषंधयःशांतिः ॥ व्वनस्पतंयःशांतिर्व्विश्श्वेंदेवाः शांतिर्ब्रह्मशांतिः सर्वंशांतिःशांतिरेवशांतिः सामाशांतिरेधि ॥ ३६ ॥ दृतेदृंहंमामित्रस्यमाचक्षुंषासर्वाणिभूतानिसमींक्षंताम् ॥ मित्रस्याहंचक्षुंषासर्वाणिभतानिसमींक्षे ॥ मित्रस्यचक्षुंषासमींक्षामहे ॥३६॥ दृतेदृंहंमाज्ज्योक्तेंसंदृशिजीव्व्यासंज्ज्योक्तेंसन्दृशिंजीव्व्यासम् ॥३६॥ नमंस्तेहरंसे शोचिषेनमंस्तेऽअस्त्वर्च्चिषें ॥ अन्न्याँस्तेंऽअस्म्मत्तंपंतुहेतयंः पावकोऽअस्म्मभ्यंशिवोभंव ॥३६॥ नमंस्तेऽअस्तुविद्युतेनमंस्तेस्तनयित्नवें ॥ नमंस्तेभगवन्नस्तुवतःस्वःसमीहंसे ॥३६॥ यतोंयतःसमीहंसेततोंनोऽअभंयंकुरु ॥ शन्नंःकुरुप्रजाभ्योभंयंन्नःपशुभ्यंः ॥३६॥ सुमित्त्रियानुऽआपऽओषंधयः संतुदुर्म्मित्त्रियास्तस्मैसंतुय्योस्मान्द्वेष्टियंचंव्वयंद्विष्ष्मः ॥३६॥ तच्चक्षुंर्देवहिंतंपुरस्तांच्छुक्रमुच्चरंत् ॥ पश्येंमशरदंःशतंजीवेंमशरदंः शतंशृणुंयामशरदंः शतम्प्रब्रवामशरदंः शतमदींनाः स्यामशरदंः शतंभूयंश्चशरदंःशतात् ॥३६॥ इति दक्षिणद्वारपूजा ॥ अथ नैर्ऋत्यां गत्वा तत्र कलशं संस्थाप्य पाद्यादिभिः पूजयेत् ॥ कुमुदाय नमः ॥ इति संपूज्य नरारूढं खड्ग



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

हस्तं निर्ऋतिमसुन्वंतमयजमानमिति मंत्रेणावाहयेत् ॥ ॐअसुंन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विंहितस्कंरस्य ॥ अुन्यमुस्म्मदिंच्छुसातं इुत्यानमोंदेविनिर्ऋतेतुभ्यंमस्तु ॥१२॥ एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः ॥ ममाध्वरं याहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ भो निर्ऋते इहागच्छेह तिष्ठेत्यावाह्य निर्ऋतये नमः इति संपूज्य नमस्कारं कुर्यात् ॥ सर्वप्रेताधिपो देवो निर्ऋतिर्नीललोहितः ॥ करे खड्गधरो नित्यं नैर्ऋताय नमोनमः ॥ अथ प्रार्थना ॥ निर्ऋतिं खड्गहस्तं च सर्वलोकैकपावनम् ॥ आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥ यंतेदेवीनिर्ऋतिरितिमंत्रेण कृष्णध्वजपताकालंभः ॥ एषतेनिर्ऋतेभागइति मंत्रेण ध्वजपताकोच्छ्रयः ॥ ॐयंतेंदेवीनिर्ऋतिराबबंधुपाशङ्ग्रीवास्वंव्विचृत्त्यम् ॥ तंतेव्विष्ष्याम्यायुंषोन मद्ध्यादथैतंपितुमद्धिप्प्रसूंतः ॥ नमोभूत्यैयेदंचुकारं ॥ १२ ॥ एषतेंनिर्ऋतेभागस्तंज्जुषस्वस्वाहाग्निनेंत्रेभ्योदेवेभ्यंःपुरःसद्भ्युः स्वाहांयमनेंत्रेभ्योदेवेभ्योंदक्षिणासद्भ्युः स्वाहांव्विश्श्वदेंवनेत्रेभ्योदेवेब्भ्यः पश्चात्त्सद्युःस्वाहामित्रावरुणनेत्रेवामुरुन्नेंत्रेब्भ्योवादेवेब्भ्यंऽउत्तरासद्भ्यः स्वाहासोमनेंत्रेब्भ्योदेवेब्भ्यंऽउपारिसद्योदुवंस्वद्युःस्वाहा ॥ ९ ॥ मोषुणइंद्रेतिमंत्रेण कृष्णव्रीह्यन्नंघृतसहितबलिं दद्यात् ॥ मोषुणऽइंद्रात्रंपृत्सुदेवैरस्तिहिष्म्मातेशुष्म्मिन्नवयाः ॥ मुहश्चिद्यस्यंमीढुषोंयव्याहविष्म्मंतोमुरुतोव्वंदंतेगीः ॥ ३ ॥ इति मंत्रं पठित्वा निर्ऋतये सांगाय सशक्तिकाय सायुधायेमं बलिं समर्पयामि। भो निर्ऋते दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य आयुःकर्ता क्षेमकर्त्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भवेत्युक्त्वाचामेत् ॥ ध्वजे वामनाय नमः ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



योमे दंडइति दंडालंभः ॥ अग्निजिह्वाय क्षेत्रपालाय नमः ॥ अथ प्रार्थयेत् ॥ राक्षसेभ्यो हि रक्षार्थं भवानत्र प्रतिष्ठितः ॥ निर्बन्धां यज्ञभूमिं त्वं कुरुष्व शववाहन ॥ इति नैर्ऋत्यदिक्कृत्यम्॥ अथ पश्चिमद्वारपूजा ॥ नमोस्तु कामरूपाय पश्चिमद्वारपाय च ॥ सामवेदाधिप त्वं हि नाम्ना कल्याणकारकः ॥ अनेन द्वारदेवतावाहनम् ॥द्वारशाखयोः अनिलाय नमः॥अनलाय नमः॥ इति वसुद्वयं नाममंत्रैः पूजयेत् ॥ शृंगेषु शाखयोर्वस्त्राणि बद्ध्वा शाखामूलयोर्धान्यपुंजोपरि भूतसंजीवनामृतनामानौ कलशौ पूर्ववत्संस्थाप्य अंजनाय नमः ॥ कलशद्वये रेवायै नमः ॥ ताप्यै नमः ॥ इति संपूज्य जपसाभिधाय अच्युताधिष्ठिताय पश्चिमद्वाराय नमः ॥ इदंविष्णुरितिमंत्रेण विष्णुं तत्रावाह्य पूजयेत् ॥ इदंविष्णुर्व्विचंक्रमेत्रेधानिदंधेपदम् ॥ समूढमस्यपाꣳसुरे स्वाहा ॥ ९ ॥ द्वारशाखयोर्धात्रे नमः ॥ विधात्रे नमः ॥ किरीटिने नमः ॥ स्कंदाय नमः ॥ इति द्वारयोः ॥ द्वारशाखयोरेव ॐजनलोकाय नमः ॥ ॐतपोलोकाय नमः ॥ बृहस्पतये नमः ॥ शुक्राय नमः ॥ ऊर्द्ध्वं सामवेदाय नमः ॥ द्वारशाखयोरेव ॐनर्म्मदायै नमः ॥ ॐगोदावर्य्यै नमः ॥ उत्तरांगे गणेशाय नमः ॥ अधोदेहल्यां द्वारश्रियै नमः ॥ देहलीमध्ये वास्तुपुरुषाय नमः ॥ एवं संपूज्य पाशहस्तं शुक्लवर्णं किरीटिनं वरुणं ध्यात्वा कलशे आवाहयेत् ॥ पाशहस्तात्मको देवो जलराश्याधिपो महान् ॥ निम्नगामीतिविख्यातो वरुणाय नमोनमः ॥ एह्येहि यादोगणवारिधीनां गणेश पर्जन्य सहाप्सरोभिः ॥ विद्याधरेंद्रामरगीयमान याहि त्वमस्मान्भगवन्नमस्ते ॥ भो वरुण इहागच्छेहतिष्ठेत्यावाह्य तत्त्वायामीतिमंत्रेण वरुणं





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सर्वोपचारैः प्रपूजयेत् ॥ तत्त्वांयामिब्रह्मणाव्वंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोद्ध्युरुशꣳ सुमानऽआयुःप्रमोषीः ॥ २१ ॥ अनेनैव मंत्रेण श्यामध्वजपताकालंभः ॥ उदुत्तमंवरुणेतिमंत्रेण तोरणोपरिनिधानम् ॥ उदुत्तमंव्वरुणपाशमस्म्मदवाधमंव्विमध्यमꣳश्रथाय ॥ अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्याम ॥ १२ ॥ त्वन्नो अग्नइतिमंत्रेण नवनीतोदनबलिदानम् ॥ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमः शोशुचानोव्विश्वाद्वेषाꣳसिप्रमुमुग्ध्द्यस्म्मत् ॥ २१ ॥ इति पठित्वा वरुणाय सांगाय सशक्तिकाय इमं नवनीतोदनबलिं समर्पयामि ॥ इत्युक्त्वा भो वरुण दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भवेति पठित्वा आचम्य वरुणं प्रार्थयेत् ॥ पाशहस्तं च वरुणमर्णसां पतिमीश्वरम् ॥ आवाहयामि यज्ञेऽस्मिन्वरुणाय नमोनमः ॥ इति संप्रार्थ्य ध्वजे शंकुकर्णाय नमः ॥ योमेदंडइति दंडालंभः ॥ योमेदंडःपरापतद्वैहायसोधि भूम्यांतमहंपुनराददे ॥ आयुषेब्रह्मणेब्रह्मवर्चसाय ॥ ध्वजे कालाय क्षेत्रपालाय नमः ॥ इति नाममंत्रेण संपूज्य अग्नआयाहीति मंत्रेण सामवेदं पूजयेत् ॥ अग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ सामवेदस्तु पिंगाक्षो जागतः शुक्रदैवतः ॥ भारद्वाजस्तु विप्रेंद्र ऋत्विक् त्वं मे मखेभवेति पठित्वा सामवेदप्रतिनिधित्वेन सामवेदीयं ब्राह्मणं गंधादिना पूजयेत् ॥ तत्र ब्राह्मणद्वयकर्त्तृको मंत्रपाठः ॥ इंद्राय सामगायत इत्येकः ॥ १ ॥ अहमस्मिन्निति द्वितीयः ॥ २ ॥ प्रथमजा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



इति तृतीयः ॥ ३ ॥ सेतुस्तर इतिचतुर्थः ॥ ४ ॥ स्वादिष्ठया इति पंचमः ॥ ५ ॥ गायंतित्वागायत्रिणइति षष्ठः ॥ ६ ॥ ज्येष्ठमास इति सप्तमः ॥ अग्रे इमे मंत्राः क्रमेण प्रदर्श्यंते ॥ इति पश्चिमद्वारकृत्यम् ॥ अथ वायव्यकोणकृत्यमाह ॥ तत्र कलशं संस्थाप्य ॥ तस्मिन्कलशे पुष्पदंताय नमः ॥ इति संपूज्य ॥ आनोनियुद्भिरित्यावाहनम् ॥ आनोंनियुद्भिःशतिनींभिरद्ध्वरᳪंसंहस्त्रिणींभिरुपयाहियज्ञम् ॥ व्वायोंऽअस्मिन्सवंनेमादयस्वयूयम्पांतस्वस्तिभिःसदांनः ॥ २७ ॥ इति पठित्वा मृगाधिरूढं धूम्रवर्णं वायुं ध्यात्वा आवाहयेत् ॥ एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ॥ प्राणाधिपः कालकवेः सहायो गृहाण पूजां भगवन्नमस्ते ॥ भो वायो इहागच्छेह तिष्ठेत्यावाह्य वायोयेते इति मंत्रेण धूम्रध्वजपताकालंभनं कुर्यात् ॥ व्वायोयेतेंसहस्त्रिणोरथासस्तेभिरागंहि ॥ नियुत्वान्त्सोमंपीतये ॥ २७ ॥ तववायेति मंत्रेण ध्वजपताकोच्छ्रयः ॥ तवंव्वायवृतस्पतेत्त्वष्टुर्ज्जांमातरद्भुत ॥ अवाᳪंस्यावृणीमहे ॥ २७ ॥ आनोनियुद्भिरितिमंत्रेण पूजयेत् ॥ आनोंनियुद्भिःशुतिनींभिरध्वरᳪंसंहस्त्रिणींभिरुपयाहियज्ञम् ॥ व्वायोंऽअस्मिन्त्सवंनेमादयस्वययंपातस्वतिभिःसदांनः ॥ २७ ॥ इति संपूज्य नमस्कारं कुर्यात् ॥ सर्वप्राणात्मको नित्यं सर्वप्राणायुरुच्यते ॥ ध्वजहस्तो महाप्राणस्तस्मै प्राणात्मने नमः ॥ अनाकारो महौजाश्च पश्चाद्दृष्टिर्गतिर्दिवि ॥ तस्मै पूज्याय महते वायुमहं नमामि चेति नत्वा ॥ ध्वजे सार्वभौमाय नमः ॥ योमेदंडइति दंडारोपणम् ॥ योमेदंडःपरापतद्वैहायसोधिभूम्यांतमहंपुनराददे० ॥ दंडे सर्वनेत्राय क्षेत्रपालाय नमः ॥ इति नत्वा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यवौदनेन बलिं दद्यात् ॥ वायवे सांगाय सायुधाय सशक्तिकायेमं यवौदनबलिं समर्पयामि ॥ भो वायो दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भवेत्युक्त्वाचम्य प्रार्थनां कुर्यात् । प्राणिनां प्राणरूपो यो महाबलपराक्रमः ॥ महावेगसमारूढ दिशं रक्ष प्रभंजन ॥ इति वायव्यदिक्कृत्यम् ॥ अथोत्तरद्वार पूजामाह ॥ नमस्ते दिव्यरूपाय त्वथर्वाधिपते प्रभो ॥ कलेरधिपतिर्नाम्ना मंगलश्चोत्तराननः ॥ इति द्वारदेवतामावाह्य कल्याणाभिधाय प्रद्युम्नाधिष्ठिताय चोत्तरद्वाराय नमः ॥ इति गंधादिभिः पूजयेत् ॥ प्रद्युम्नाय नमः ॥ द्वारशाखयोः ॐ प्रत्यूषाय नमः ॥ ॐ प्रभासाय नमः ॥ इति वसुद्वयं नाममंत्राभ्यां पूजयेत् ॥ शृंगेषु शाखयोर्वस्त्राणि बद्ध्वा शाखामूलयोर्धान्यपुंजोपरि धनदश्रीपदनामानौ कलशौ पूर्ववत्संस्थाप्य पूजयेत् ॥ धनदाय नमः ॥ श्रीप्रदाय नमः ॥ सार्वभौमाय नमः ॥ इति दिगीशं संपूज्य कलशे वेण्यै नमः ॥ इति संपूज्य कल्याणाभिधाय प्रद्युम्नाधिष्ठितायोत्तरद्वाराय नमः ॥ प्रद्युम्नाय नमः ॥ शाखयोर्जयाय नमः ॥ विजयाय नमः ॥ पुनः धात्रे नमः ॥ विधात्रे नमः ॥ ॐ सत्यलोकाय नमः ॥ ॐ ध्रुवलोकाय नमः ॥ पुनः शनैश्चराय नमः ॥ राहवे नमः ॥ ऊर्ध्वम् अथर्ववेदाय नमः ॥ द्वारशाखयोरेव वेण्यै नमः ॥ पयोष्ण्यै नमः ॥ उत्तरांगे गणेशाय नमः ॥ अधोदेहल्यां द्वारश्रियै नमः ॥ देहलीमध्ये वास्तुपुरुषाय नमः ॥ पार्वतीशाय नमः ॥ चंडेश्वराय नमः ॥ इति द्वारयोः ॥ द्वारदेशे हꣳसइतिमंत्रेण सोममावाह्य पूजयेत् ॥ ॐ हꣳसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतंबृहत् ॥ १० ॥ ततो नरयुतं विमानस्थं कुबेरं ध्यात्वा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



आवाहयेत् ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ॥ सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ भो कुबेर इहागच्छ इहतिष्ठेत्यावाह्य पूजयेत् ॥ ततः सोमोधेनुमितिमंत्रेण सुवर्णवर्णध्वजपताकालंभः ॥ वयꣳसोमेतिमंत्रेण तोरणोपरिनिधानम् ॥ सोमो धेनुꣳसोमोऽअर्व्वं तमाशुꣳसोमो वीरंकर्म्मण्यं ददाति ॥ सादन्यं विदथ्यꣳसभेयं पितृश्रवणंयोददाशदस्मै ॥ ३४ ॥ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतः सचेमहि ॥ ३ ॥ योमेदंडइति दंडालंभः ॥ योमेदंडःपरापतद्वैहायसोधिभूम्यांतमहंपुनरादद० ॥ वयꣳसोमइत्यव्यवहितपूर्वोक्तेन मंत्रेण पूजनम् ॥ ध्वजे सुमुखाय नमः ॥ एकपादाय क्षेत्रपालाय नमः ॥ ततः प्रैयंगवबलिदानम् ॥ सोमाय सांगाय सायुधाय सशक्तिकाय इमं बलिं समर्प्पयामि इत्युक्त्वा भो सोम दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य गृहे आयुःकर्त्ता क्षेमकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भवेति पठित्वा आचम्य सोमं नमेत् ॥ नक्षत्राणां च सर्वेषां सोमो राजा प्रकीर्तितः ॥ रत्नांगाय नभोगाय सोमराजाय ते नमः ॥ इति नत्वा प्रार्थयेत् ॥ सर्वनक्षत्रमध्ये तु सोमो राजा व्यवस्थितः ॥ तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥ इति नत्वा शन्नोदेवीति मंत्रेण अथर्व्ववेदं पूजयेत् ॥ शन्नोदेवीरभिष्टयआपो भवंतुपीतये ॥ शंय्योरभिस्रवंतुनः ॥ ३६ ॥ सुवर्णनयनोऽथर्वानुष्टुप्छंदः पुरंदरः ॥ वेदो वैखानगोत्रस्तु ऋत्विक्त्वं मे मखे भव ॥ इति ध्यात्वा अथर्व्वणवेदप्रतिनिधित्वेन अथर्व्वणवेदीयं ब्राह्मणं गंधादिना पूजयेत् ॥ ततो ब्राह्मणद्वयकर्तृको द्वारपालमंत्रपाठः ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अथर्वांगिरसं चैव अथर्व्वशिरसं तथा ॥ देवीं च मधुसूक्तिं च रोधसं शांतिमेव च ॥ अथर्व्वाणौ द्वारपालौ पठेतामुत्तरस्थितौ ॥ इत्युत्तरद्वारपूजा ॥ अथ ईशानकोणकृत्यमाह ॥ ऐशाने कलशं संस्थाप्य तत्र सुप्रतीकाय नमः ॥ इति संपूज्य ॥ तस्मिन्कलशे वृषारूढं त्रिनेत्रं शुक्लवर्णमीशानं ध्यात्वा आवाहयेत् ॥ एह्येहि यज्ञेश्वर नस्त्रिशूलकपालखट्वांगगणेन सार्द्धम् ॥ लोकेश यज्ञेश्वरयज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ भो ईशान इहागच्छेह तिष्ठेति संस्थाप्य इत्यावाह्य अभित्वाशूरेतिमंत्रेणेशानं पूजयित्वा नमस्कारं कुर्यात् ॥ अभित्वांशूरनोनुमोदुंग्धाऽइवधे नवंः ॥ ईशांनमुस्यजगंतःस्वर्द्दशुमीशांनमिंद्रतस्थुषंः ॥ २७ ॥ सर्वविद्याधिपो देव ईशानो नामनामतः ॥ शूलपाणे महा देव त्रैलोक्यपतये नमः ॥ नमःशंभवायचेतिमंत्रेण रक्तध्वजपताकालंभः ॥ नमंः शंभुवायं चमयोभुवायंचुनमंः शङ्करायं चमयस्करायंचुनमंः शिवायंचशिवतंरायच ॥ १६ ॥ तमीशानमितिमंत्रेण ध्वजपताकोच्छ्रायः ॥ तमीशांनंजगंतस्तस्थुषस्प्पतिं धियञ्जिन्न्वमवंसेहूमहेवुयम् ॥ पूषानोयथावेदंसामसंद्वृधेरंक्षितापायुरदंब्धःस्वस्तयें ॥२८॥ पताकायां पुष्ट्यै नमः ॥ ध्वजे सुसु खाय नमः ॥ सुप्रतिष्ठिताय नमः ॥ क्षमाय क्षेत्रपालाय नमः ॥ योमेदंड इति दंडालंभः ॥ योमेदंडःपरापतद्वैहायसोधिभूम्याम् ॥ तमहंपुनरादद० ॥ पुनः नमस्कारः ॥ रक्षणं कुरु मे देव त्रिनेत्राय त्रिशूलिने ॥ वृषध्वजाय यज्ञाय नमस्तुभ्यमुमापते ॥१॥ वृष स्कंधसमारूढ शूलहस्त त्रिलोचन ॥ आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥२॥ सर्वाधिपो महादेवः कृशानुश्शक्र ईश्वरः ॥

६

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमोनमः ॥ ततः गोधूमगवेधुग्बलिं दद्यात् ॥ ईशानाय सांगाय सपरिवाराय सायुधाय सशक्तिकायेमंबलिं समर्प्पयामि ॥ भो ईशान दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य गृहे आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भवेत्युक्त्वा आचामेत् ॥ इति ईशानदिक्कृत्यम् ॥ अथ ईशानपूर्वयोर्मध्ये अनंताय नमः अनंतमावाह्य पूजयेत्॥ अनंतं शयनीये समासीनं नीलवर्णं ध्यात्वा ॥ एह्येहि पातालधरामहेंद्र नागांगनाकिन्नरगीयमान ॥ रक्षोरगेंद्रामरलोकसंघैरनंत रक्षाध्वरमस्मदीयम् ॥ भो अनंत इहागच्छेहतिष्ठेत्यावाह्य अनंताय नमः ॥ इत्यनंतं सर्वोपचारैः पूजयेत् ॥ ततो नमस्कारः ॥ पन्नगाधिपतिर्देवस्त्वनंतो नाम नामतः ॥ पाताले वसते नित्यं नागराजाय ते नमः ॥ नमोस्तुसर्प्पेभ्य इतिमंत्रेण मेघवर्णध्वजपताकालंभः ॥ नमोस्तुसर्प्पेभ्योयेकेचंपृथिवीमनु ॥ येऽअंतरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ १३ ॥ तद्विष्णोरितिमंत्रेण ध्वजपपाकोच्छ्रायः ॥ तद्विष्णोःपरमम्पदꣳसदापश्यन्तिसूरयः ॥ दिवीवचक्षुराततम् ॥ ६ ॥ योमेदंड इतिदंडालंभः ॥ योमेदण्डःपरापतद्वैहायसोधिभूम्यांतमहंपुनरादद० ॥ ध्वजे भैरवाय क्षेत्रपालाय नमः ॥ विष्णोर्नुकमिति मंत्रेण ध्वजपताकयोः पूजनं पायसबलिदानं च कुर्यात् ॥ ॐविष्णोर्नुकंवीर्य्याणिप्रवोचंयःपार्थिवानिविममेरजांꣳसि ॥ योऽअस्कंभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ ९ ॥ अनंताय सांगाय सपरिवाराय सायुधाय सशक्तिकायेमं बलिं समर्प्पयामि ॥ भो अनंत दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सपरिवारस्य गृहे आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भवेत्युक्त्वा आचम्य प्रार्थयेत् ॥ अनंतत्वादनं तस्त्वं फणींद्राधिपते हरे ॥ त्वयाऽत्र रक्षणं कार्यं कृष्णनेत्राय ते नमः ॥ योऽसावनंतरूपेण ब्रह्मांडं सचराचरम् ॥ पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमोनमः ॥ इतीशानपूर्वयोर्मध्यकृत्यम् ॥ अथ निर्ऋतिपश्चिमयोर्मध्ये गत्वा तत्र ब्रह्माण मावाह्य पूजयेत् ॥ हंसस्थं रक्तवर्णं ब्रह्माणं ध्यात्वा ॥ एह्येहि सर्वाधिपते सुरेंद्र लोकेन सार्द्धं पितृदेवताभिः ॥ सर्वस्य धाताऽस्यमितप्रभावो विशाध्वरं नः सततं शुभाय ॥ भो ब्रह्मन्सर्वलोकस्य सुखायाथ हिताय च ॥ पद्मयोनिश्चतुर्मूर्तिर्वेद व्यासः पितामहः ॥ आयाहि ब्रह्मलोकात्त्वं तस्मै ब्रह्मात्मने नमः ॥ इत्यावाह्य ब्रह्मयज्ञानमितिमंत्रेण ब्रह्माणं पूज येत् ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमुतःसुरुचोवेनआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसुतश्चयोनिमसतश्चविवंः ॥ १३ ॥ यद्देवेतिमंत्रेण रक्तध्वजपताकालंभः ॥ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम् ॥ अग्निर्म्मातस्म्मा देनसोविश्वान्मुञ्चत्वꣳहसः ॥ २० ॥ ब्रह्मयज्ञानमितिमंत्रेण ध्वजपताकोच्छ्रायः ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसी मुतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसुतश्चयोनिमसतश्चविवंः ॥ १३ ॥ गायत्र्यै नमः ॥ इति पताकां संपूज्य ॥ सुप्रभाय नमः इति ध्वजं संपूज्य ब्रह्माणं नमेत् ॥ पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पिता महः ॥ यज्ञाध्यक्षश्चतुर्वक्रस्तस्मै नित्यं नमोनमः ॥ इति नत्वा ध्वजे सुप्रभाय नमः ॥ भूतनाथाय क्षेत्रपालाय नमः ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



योमेदंड इति दंडालंभः ॥ योमेदंडः परापतद्वैहायसोधिभूम्यांतमहंपुनरादद० ॥ ततः सनोभुवनस्य इतिमंत्रेण पायसबलिं दद्यात् ॥ सनो भुवनस्यपतेप्प्रजापतेयस्यंतऽउपरिंगृहायंस्यवेह ॥ अस्म्मैब्रह्मणेस्म्मैक्षुत्रायमहिशर्म्मयच्छुस्वाहा ॥ १८ ॥ इति पठित्वा ब्रह्मणे सांगाय सायुधाय सशक्तिकायेमं बलिं समर्प्पयामि ॥ भो ब्रह्मन् दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य गृहे आयुःकर्ता क्षेमकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भवेत्युक्त्वा आचम्य ब्रह्माणं प्रार्थयेत् ॥ पितामह जगत्स्रष्ट्रे कृष्णेशव्योमरूपिणे ॥ व्योमस्थाय नमस्तुभ्यं रक्षस्वेदं महाप्रभो ॥ १ ॥ अथ मंडपमध्ये ब्रह्मयज्ञानमितिमंत्रेण महाध्वजं संपूज्य वंशे किन्नरेभ्यो नमः इति पूजयित्वा इन्द्रस्यवृष्णोरितिमंत्रेण स्थापयेत् ॥ ब्रह्मंजज्ञानं प्रथमंपुरस्ताद्विसीमुतःसुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यव्विष्ठाःसुतश्चुयोनिमसतश्चुव्विवः ॥ ॥ १३ ॥ इंद्रस्युव्वृष्णोव्वरुणस्युराज्ञऽआदित्यानाम्मुरुतांछशर्द्धऽउग्ग्रम् ॥ मुहामनसांभुवनच्च्युवानाङ्घोषोदेवानांजयंतामुदस्थात् ॥ १७ ॥ ततः प्राच्यां गणानांत्वेतिमंत्रेण गणपतिं पूजयेत् ॥ ततः नमोस्तुरुद्रेभ्य अस्मेरुद्रा इति मंत्रद्वयेन मंडपबाह्यदिक्षुविदिक्षु रुद्रान्संस्थाप्य तेभ्यो बलिं दद्यात् ॥ नमोस्तुरुद्रेभ्युोयेदिवियेषांव्वुर्षमिषवः ॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशंप्प्रतीचीर्दशोदीचीर्दशोर्द्धाः ॥तेभ्युोनमोऽअस्तुतेनोवंतुतेनोमृडयंतुतेयंद्विष्म्मोयश्चनोद्वेष्टितमेषाञ्जंभेदध्मः ॥१६॥ ॐअस्मेरुद्रामेहनापर्व्वतासोव्वृत्रहत्येभरंहूतौसुजोषाः ॥ यःशछंसतेस्तुवतेधायिपुज्रऽइंद्रंज्येष्ठाऽअस्म्माँअवंतुदेवाः ॥३३॥ अथ



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सर्वभूतेभ्यो बलिदानम् ॥ अधश्चैव तु ये लोका असुराश्चैव पन्नगाः ॥ सपत्नीपरिवाराश्च प्रतिगृह्णंत्विमं बलिम् ॥३॥ नक्षत्राधिप तिश्चोर्ध्वं नक्षत्रैः परिवारितः ॥ स्थानं चैव पितॄणां तु सर्वे गृह्णंत्विमं बलिम् ॥ २ ॥ ईशानोत्तरयोर्मध्ये क्षेत्रपालो महाबलः ॥ भीमनामा महादंष्ट्रः सर्वे गृह्णंत्विमं बलिम् ॥ ये केचिदिह लोके तु आगता बलिकांक्षिणः ॥ तेभ्यो बलिं प्रयच्छामि नम स्कृत्य पुनः पुनः ॥ बलिं गृह्णंत्विमे देवा आदित्या वसवस्तथा ॥ मरुतोप्यश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचा मातरो नगाः ॥ शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृंभकाः सिद्धगंधर्वा माला विद्याधरा नराः ॥ दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ सौम्या भवंतु मे तृप्ता देवासुरगणास्तथा ॥ इति ईशान भागे बलिं दद्यात् ॥ ततो मंडपात् पूर्वस्यां दिशि किंचिद्भूमिमुपलिप्य तत्रोपविश्य ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चरा णि च ॥ ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वंतु तानि मे ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मुनयो गावो देवमातर एव च ॥ सर्वे ममाध्वरे रक्षां प्रकुर्वंतु मुदान्विताः ॥ ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह ॥ रक्षंतु मंडपं सर्वे घ्नन्तु रक्षांसि सर्वतः ॥ एवं संप्रार्थ्य श्लोकोक्तान्देवान्नाममंत्रैस्तस्यामेव भूमौ पूजयेच्चंदनादिभिः ॥ त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो नमः ॥ त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः ॥ ब्रह्मणे नमः ॥ विष्णवे नमः । शिवेभ्यो नमः । दानवेभ्यो नमः ॥ गंधर्वेभ्यो नमः ॥ यक्षेभ्यो नमः ॥ राक्षसेभ्यो नमः ॥ पन्नगेभ्यो नमः ॥ ऋषिभ्यो नमः ॥ गोभ्यो नमः ॥ देवमातृभ्यो नमः ॥ एवं प्रत्येकं संपूज्य एतैरेव नाममंत्रैस्तस्यां भूमौ तेभ्य एव बलिं दद्यात् ॥ त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्य इमं बलिं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



समर्प्पयामि ॥ त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्य इमं बलिं समर्प्पयामि ॥ ब्रह्मणे नमः । इमं ब० ॥ विष्णवे नमः । इमं ब० ॥ रुद्राय नमः । इमं ब० ॥ देवेभ्यो नमः । इमं ब० ॥ दानवेभ्यो नमः । इमं ब० ॥ गंधर्वेभ्यो नमः । इमं ब० ॥ यक्षेभ्यो नमः । इमं ब० ॥ राक्षसेभ्यो नमः । इमं ब० ॥ पन्नगेभ्यो नमः । इमं ब० ॥ ऋषिभ्यो नमः । इमं ब० ॥ गोभ्यो नमः । इमं बलिं० ॥ देवमातृभ्यो नमः । इमं बलिं समर्पयामि ॥ इति बलिं दत्त्वा पाणिपादं प्रक्षाल्य यजमानः प्राग्द्वारेण सऋत्विङ् मंडपं प्रविश्य वास्तुदेवसमीपमागत्य उपविश्य पूजापरिपूर्णतां प्रार्थयेत् ॥ अद्य पूर्वोच्चारितैवंग्रहगुणविशेषणविशिष्टायां तिथौ मंडपस्तंभदेवानां तोरणद्वारत्रिशूलपताकाध्वजानां कृतपूजनस्य विधेर्यन्न्यूनमतिरिक्तं तत्सर्वं श्रीवास्तुदेवादिदेवस्य प्रसादात् तत्सन्निधिस्थानां ब्राह्मणानां प्रसादात्परिपूर्णमस्तु ॥ एवं सांगं मंडपं संपूज्यात्मानं कृतार्थं मन्वीत ॥ इति मंडपपूजा ॥ अथ वास्तुमंडलचतुःकोणेषु लोहशंकुचतुष्टयम् ईशानादिप्रदक्षिणक्रमेण रोपयेत् ॥ तत्र मंत्राः ॥ विशंतु भूतले नागा लोकपालाश्च सर्वतः ॥ अस्मिन्गृहे च तिष्ठंतु आयुर्बलकराः सदा ॥ अनेन मंत्रेण सर्वत्र शंकुमारोपयेत् ॥ ततः शंकूनां पार्श्वे रोपणक्रमेण माषभक्तदध्योदनेन बलिदानम् ॥ तत्र मंत्राः ॥ ऐशाने बलिं० रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तत्समाश्रिताः ॥ बलिं तेभ्यः प्रयच्छामि गृह्णंतु सततोत्सुकाः ॥ १ ॥ आग्नेये० अग्निभ्यश्चाथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ॥ तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ २ ॥ नैर्ऋत्ये० नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ॥ बलिं तेभ्यः प्रयच्छामि सर्वे गृह्णंत्विमं बलिम् ॥ ३ ॥ वायव्ये० वायव्याधिपतिश्चैव वायव्यां ये च राक्षसाः ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ ततो वास्तुपीठे कुंकुमादिना सुवर्णरजतादिशलाकया दश रेखाः कार्याः ॥ शांता १ यशोवती २ कांता ३ विशाला ४ प्राणवाहिनी ५ ॥ सती ६ च सुमना ७ नंदा ८ सुभद्रा ९ सुरथा १० तथा ॥ १ ॥ इत्योंकारादिनमोंतैर्नामभिः पश्चादारंभाः प्रागंताः ॥ दक्षिणोत्तरसमाश्रिता अंगुलिद्वयांतरा दशरेखाः कृत्वा ॥ पुनः ॥ हिरण्या १ सुव्रता २ लक्ष्मी ३ विंभूति ४ विंमला ५ प्रिया ६ ॥ जया ७ ज्वाला ८ विशोका ९ च विशदा १० नामभिस्तथा ॥ एता दक्षिणारंभा उदगंताः प्राक्संस्था रेखाः कृत्वा ता अपि गंधादिभिः पूजयेत् ॥ एव मेकाशीतिपदं वास्तुमंडलं भवति ॥ एतद्गृहवास्तुमंडलम् ॥ वास्तुमंडलपश्चिमदिशि कुंडे स्थंडिले वा पंचभूसंस्कारा न्कृत्वा अग्निं प्रतिष्ठाप्य पूजयेत् ॥ तद्यथा–दर्भैः परिसमूह्य तानीशान्यां परित्यज्य गोमयेनोपलिप्य स्रुवेणोत्तरोत्तर क्रमेणोल्लिख्योल्लेखनत्रिक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य सुमूहूर्ते शुभे लग्ने गुरोर्गृहाद्वा अभावे चान्यवि प्रगृहात्पूजिताग्निं कांस्यपात्रवेष्टितमादाय कुंडे स्थापयेत् ॥ तत्र मंत्रः ॥ ॐअग्निर्मूर्द्धादिवः ककुत्पतिःपृथिव्याऽअयमपाᳬरेताᳬसिजिन्वति ॥ इंद्रस्युत्वोर्जसासादयामि ॥ १ ॥ अथ प्रार्थना ॥ त्वमग्निः सर्वयज्ञानां यथोक्तफलकारकः ॥ ब्रह्माद्यै र्लोकपालैश्च त्वया गृह्येण गृह्यते ॥ १ ॥ देवदेव जगन्नाथ यज्ञानां पतये नमः ॥ तव पूजां करिष्यामि कुंडस्थ परमेश्वर ॥ २ ॥ एवं संप्रार्थ्य तत्सदिति कालज्ञानं कुर्यात् ॥ मम सकुटुंबस्य सपरिवारस्याविघ्नेन कर्मणा वास्तुप्रतिष्ठासिद्ध्यर्थं सकलमंगलावाप्तये अग्न्यावाहनप्रतिष्ठाद्यर्चनमहंकरिष्ये इति संकल्पः ॥ ॐजुष्टोदमूनामित्यस्य आत्रेयो वसुश्रुतोग्निस्त्रिष्टुप्

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



छंदोऽग्न्यावाहने विनियोगः ॥ ॐजुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ॥ विश्वांअग्नेअभियुजोविहत्यांशत्रूय तामाभराभोजनानि ॥ १ ॥ एह्यग्नइत्यस्य मंत्रस्य राहूगणो गौतमऋषिः अग्निर्देवता त्रिष्टुप्छंदः अग्न्यावाहने विनियोगः ॥ ॐएह्यग्नइहहोतानिषीदादब्धुःसुपुरएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनुसायदेवान् ॥ इत्यक्षतैरावाह्य समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापने विनियोगः ॥ ॐभूर्भुवःस्वरोमित्यग्निं प्रतिष्ठाप्य मनो जूतिरितिमंत्रं पठेत् ॥ चत्वारिश्रृंगा इत्यस्य गौतमो वामदेवोऽग्निस्त्रिष्टुप् अग्निमूर्तिध्याने विनियोगः ॥ ॐचत्वारिश्रृंगात्रयो अस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश ॥ सप्तहस्तश्चतुश्शृंगः सप्तजिह्वो द्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा॥ बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ॥ तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् ॥ आत्माभिमुखमासीन एवं रूपो हुताशनः ॥ काली कराली तेजस्वी धूम्रवर्णा ज्वलन्मुखी ॥ पिंगला रोहिताक्षा च सप्त जिह्वाः प्रकीर्तिताः ॥ १ ॥ आवाह्य देवं पुरुषं महांतं सुरासुरैरर्चित पादपल्लवम् ॥ इंद्रादयो यस्य मुखे वसंति विशाद्य कुंडे सुरलोकनाथ ॥ १ ॥ एषहिदेवः प्रदिशोनुसर्वाःपूर्वोहिजातः सउगर्भे अंतः ॥ सविजायमानः सजनिष्यमाणः प्रत्यङ्मुखस्तिष्ठतिविश्वतोमुखः ॥ अग्ने वैश्वानर शांडिल्यगोत्र मेषध्वज प्राङ्मुख मम संमुखो वरदो भव ॥ ॐअग्नये नमः पाद्यं स० ॥ अर्घ्यं स० ॥ आचमनीयं स० ॥ स्नानं स० ॥ वस्त्रं यज्ञोपवितं गंधा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

क्षतं पुष्पं धूपं दीपं नैवेद्यं तांबूलं पूगीफलं करोद्वर्तनं दक्षिणां समर्पयामि ॥ अथ गंधमात्रेणैकोनपंचाशदग्निनामपूजा ॥ ॐ पावकाय नमः ॥ १ ॥ पवमानाय नमः ॥ २ ॥ अग्नये नमः ॥ ३ ॥ वैश्वानराय नमः ॥ ४ ॥ वह्नये नमः ॥ ५ ॥ वीतिहोत्राय नमः ॥ ६ ॥ धनंजयाय नमः ॥ ७ ॥ कृपीटयोनये नमः ॥ ८ ॥ ज्वलन्नेत्राय नमः ॥ ९ ॥ जातवेदसे नमः ॥ ॥ १० ॥ तनूनपदे नमः ॥ ११ ॥ बर्हिषे नमः ॥ १२ ॥ शुष्मणेनमः ॥ १३ ॥ कृष्णवर्त्मने नमः ॥ १४ ॥ शोचिष्केशाय नमः ॥ १५ ॥ उषर्बुधाय नमः ॥ १६ ॥ वसुत्रपाय नमः ॥ १७ ॥ आश्रयाशाय नमः ॥ १८ ॥ बृहद्भानवे नमः ॥ ॥ १९ ॥ कृशानवे नमः ॥ २० ॥ अनलाय नमः ॥ २१ ॥ रोहिताय न० ॥ २२ ॥ स्वाशाय नमः ॥ २३ ॥ शिखिवाहनाय० ॥ २४ ॥ आशुशुक्षणये नमः ॥ २५ ॥ हिरण्यरेतसे नमः ॥ २६ ॥ हुतभुजे नमः ॥ २७ ॥ दहनाय नमः ॥ २८ ॥ हव्यवाहनाय० ॥ २९ ॥ सप्तार्चिषे नमः ॥ ३० ॥ कालाय० ॥ ३१ ॥ करालिने न० ॥ ३२ ॥ मनोजवाय न० ॥ ३३ ॥ सुलोहिताय० ॥ ३४ ॥ धूम्रवर्णाय० ॥ ३५ ॥ स्फुलिंगाय नमः ॥ ३६ ॥ विश्वदासाख्याय० ॥ ३७ ॥ सप्तजिह्वाय० ॥ ॥ ३८ ॥ दमुनसे० ॥ ३९ ॥ शुक्राय० ॥ ४० ॥ चित्रभानवे० ॥ ४१ ॥ सुभानवे० ॥ ४२ ॥ तारणाय० ॥ ४३ ॥ विभावसवे० ॥ ४४ ॥ शुचिने० ॥ ४५ ॥ अवितताय० ॥ ४६ ॥ जाठराग्नये० ॥ ४७ ॥ गार्हपत्याय० ॥४८॥ ॐयज्ञाधिपतये० ॥ ४९ ॥ अथांगपूजा गंधमात्रेण ॥ ॐ वासुदेवाय नमः शिरः पूजयामि ॥ ॐ अग्नये नमः कर्णौ पूज०॥ ॐ वैश्वानराय० नेत्रे पू० ॥ ॐवह्नये० नासिकां पू० ॥ ॐ वीतिहोत्राय० कपोलौ पू० ॥ ॐ धनंजयाय० मुखं पू० ॥ ॐ कृपीटयो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नये० कंठं पू० ॥ ॐ ज्वलन्नेत्राय नमः ग्रीवां पू० ॥ ॐ जातवेदसे० भुजौ पू० ॥ ॐ तनूनपदे०स्तनौ पू० ॥ ॐ बर्हिषे० कुक्षिं पू० ॥ ॐ शुष्मणे० नाभिं पू० ॥ ॐ कृष्णवर्त्मने नमः मेढं पू० ॥ ॐ शोचिष्केशाय० कटिं पू० ॥ ॐ उषर्बुधाय ऊरू पू० ॥ ॐ पावकाय० जानुनी पू० ॥ ॐ कृशानुगाय० गुल्फौ पू० ॥ ॐ रोहिताय० चरणौ पू० ॥ अथ स्तुतिः ॥ ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे ॥ देवाँ आसादयादिह ॥ १ ॥ अग्निर्मूर्द्धा इति मंत्रं पठेत् ॥ द्यौः शांतिरितिमूर्द्धाभिषेचनम् ॥ कालज्ञानं कृत्वा मम सकलाभीष्टकामनासिद्ध्यर्थं सकलदुरितोपद्रवशांतिपूर्वकधनधान्यायुरारोग्यैश्वर्ययशोवृद्ध्यर्थं च मम सपरिवारस्योपर्यग्निदेवप्रीतये निर्विघ्नपूर्वकवास्तुयज्ञसिद्धिकामनया यत्पूजनं कृतं तेन श्रीमानग्निदेवः प्रीणातु पूजितो वरदो भवतु ॥ १ ॥ अथ स्तुतिः ॥ मखाधिप नमस्तुभ्यं सर्ववैरिनिषूदन ॥ पवित्रं कुरु मे यज्ञं त्वदृते नैव सिद्ध्यति ॥ ॥ १ ॥ ज्ञानतोऽज्ञानतो वापि यावद्विधिरनुष्ठितः ॥ तत्सर्वं त्वत्प्रसादेन संपूर्णं भवतु प्रभो ॥ २ ॥ कृतांजलिपुटो भूत्वा इमं मंत्रमुदीरयेत् ॥ प्रसादं कुरु मे देव आगच्छ यज्ञमंडपे ॥ अभ्यर्थितो मया भक्त्या परिवारसमन्वितः ॥ सान्निध्यं कुरु मे देव पवित्रे ह्यत्र मंडपे ॥ एवमामंत्र्य देवेशं नमस्कृत्य पुनः पुनः ॥ ३ ॥ ततो यजमानः हस्तेनाग्निकुंडं स्पृशेत् ॥ पुरुषसूक्ताध्यायः पठनीयः ॥ इत्यग्निपूजा समाप्ता ॥ ततः ईशाने ग्रहवेद्यामधिदेवप्रत्यधिदेवसहितान्ग्रहान्संस्थाप्य तदीशान्यां यथोक्तमंत्रैः पूर्वोक्तद्रव्यसहितं कलशं स्थापयेत् ॥ संकल्पः ॥ ॐ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे अष्टा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

विंशतितमे कलियुगे कलिप्रथमचरणे जंबूद्वीपे भरतखंडे आर्यावर्तांतर्गतमध्यदेशे बौद्धावतारे वर्तमाने यथानामसंवत्सरे अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रयोगकरणमुहूर्तवर्तमानायाम् अमुकराशिस्थिते चंद्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु यथायथाराशिस्थानस्थितेषु ग्रहेषु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ परमेश्वराज्ञारूपसकलशास्त्रश्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामः अमुकगोत्रोत्पन्नस्य मम लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थम् इह जन्मनि जन्मांतरे सर्वपापक्षयार्थं तथा मम सभार्यस्य सपुत्रस्य सबांधवस्य सपशोः समस्तभयव्याधिजरापीडापरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं तथा मम जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमद्वादशस्थानस्थितक्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशद्वारा एकादशस्थान स्थितशुभफलप्राप्त्यर्थं पुत्रपौत्रादिसंततेरविच्छिन्नवृद्ध्यर्थं नूतनगृहप्रवेशाख्यकर्मांगतया सूर्यादीनामधिदेवताप्रत्यधिदेवतासहि तानामावाहनप्रतिष्ठाद्यर्चनं तथाच स्नाननिमित्तकमार्जनार्थमीशानकोणे कलशस्थापनप्रतिष्ठापूजनमहं करिष्ये ॥ इति संकल्पः ॥ ॐ सुमुखश्चेतिस्मरणांते ॐ भूर्भुवः स्वर्गणपते सवाहन सपरिवार अष्टशक्तिसहित इहागच्छेह तिष्ठ मम पूजां गृहाण ॥ गणानांत्वेति मंत्रेण आवाहनम् ॐ मनोजूतिरिति मंत्रेण प्रतिष्ठां कृत्वा ॥ ॐ गणपतये नमः इति मूलमंत्रेण पाद्यादिभिः पूजयेत् ॥ ततः वक्रतुंडेतिप्रार्थना ॥ कृतेनानेन पूजनेन श्रीमान् गणेशः प्रीणातु पूजितो वरदो भवतु ॥ तत ईशानकोणे वरुणपूजनम् । अव्रणं कलशमक्षतविभूषितं स्थाप्य भूमिस्पर्शनमंत्रः ॥ भूरसिभूमिरस्यदितिरसिविश्वधाया विश्वं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



स्युभुवंवस्यधुर्त्री ॥ पृथिवींयंच्छपृथिवींदृꣳहपृथिवींमाहिंꣳसी ॥ १ ॥ धान्यमसीतिधान्यम् ॥ धान्यमसिधिनुहिदेवान्प्राणा यंत्वोदानायंत्वाव्यानायंत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवंःसविताहिरंण्यपाणिःप्रतिंगृभ्णात्वच्छिंद्रेणपाणिनाचक्षुंषेत्वामही नांपयोंसि ॥ २ ॥ वरुणस्येतिमंत्रेणोदकं क्षिपेत् ॥ वरुणस्योत्तंभनमसिवरुणस्येत्यादि ॥ ३ ॥ वसोः पवित्रेति कंठे वस्त्रं वेष्टयेत् ॥ व्वसोःपवित्रमसिशतधांरंवसोंः पवित्रंमसिसुहस्रंधारमित्यादि ॥ ४ ॥ याःफलेतिपूगीफलम् ॥ याः फलिनीर्य्याऽ अंफलाऽअंपुष्पायाश्चपुष्पिणींः ॥ बृहस्पतिंप्रसूतास्तानोंमुंचुत्वꣳहंसः ॥ ५ ॥ कनकेति पंचरत्नानि कलशे निक्षिपेत् ॥ कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ॥ एतानि पंचरत्नानि परिवाजेतिमंत्रेण निक्षेपत् ॥ परिवाजंपतिःकविरग्निर्हव्यान्यं क्रमीत्॥दधद्रत्नांनिदाशुषें॥६॥ हिरण्यगर्भेति दक्षिणां हिरण्यं वा कलशे क्षिपेत् ॥७॥ गंधद्वारेतिमंत्रेण कलशे गंधं क्षिपेत् ॥ ॥ ८ ॥ याऽओषधीतिसर्वौषधीः कलशे क्षिपेत् ॥ याऽओषंधीःपूर्वांजाताद्देवेभ्यंःस्त्रियुगंपुरा ॥ मनैनुबभ्रूणांमहꣳशतधामांनि सुतचं ॥९॥ ततोऽस्मिन्कलशे अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमात् ह्रदात् ॥ राजद्वाराद्गोकुलाच्च मृदमानीय स्योनापृथिवी तिमंत्रेण निक्षिपेत् ॥ स्योनापृंथिविनोभवानृक्षरानिवेशंनी ॥ यच्छांनःशर्मंसप्रथाः ॥१०॥ कांडादिति दूर्वाः ॥ कांडांत्कांडात्प्र रोहंतीपरुंषःपरुंषस्परिं॥एवानोंदूर्वेप्रतंनुसहस्रेंणशतेनंच ॥११॥ चूताश्वत्थन्यग्रोधोदुंबरप्लक्षेतिपंचपल्लवान् ॥ अश्वत्थेवोंनिषदंनं पर्णेवोंवसतिष्कृता ॥ गोभाजइत्किलांसथयत्सनवंथपूरुंषम् ॥१२॥ पवित्रेस्थोइतिमंत्रेण कलशे पवित्राणि क्षिपेत् ॥ पवित्रेस्थो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वैष्णव्यौसवितुर्वः प्रसुवउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रपूतस्यंयत्कामः पुनेतच्छकेयम् ॥१३॥
कलशे पूर्णादर्वीतिपूर्णपात्रम् ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेववविक्रीणावहाऽइषमूर्जँशतक्रतो ॥४४॥ श्रीश्चतेइतिश्री
फलं कलशे निदध्यात् ॥ मनोजूतिरितिप्रतिष्ठा ॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजतेतेनसर्वमेवप्रतिष्ठितंभवति ॥ तत्त्वाया
मीति वरुणमावाह्य ॐभूर्भुवःस्वः भो वरुण इहागच्छेह तिष्ठ षोडशोपचारैः वरुणं पूजयेत् ॥ कलशे गंगाद्यावाहनम् ॥ सर्वे समुद्राः
सरितस्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥१॥ कलशाभिमंत्रणम् ॥ कलशस्य मुखे विष्णुः कंठे
रुद्रः समाश्रितः ॥ मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोथ यजुर्वेदः
सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ततः प्रार्थना ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥
उत्पन्नोसि यदा कुंभ विधृतो विष्णुना स्वयम् ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठंति भूतानि
त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयंत्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥
त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सानिध्यं कुरु मे देव प्रसन्नो भव
सर्वदा ॥ इति वरुणपूजा ॥ अथ मंडलमध्ये वर्तुलाकारे चक्रे सूर्य्यमावाहयेत् ॥ ॐ दिवाकरं सहस्रांशुं सुरासुरनमस्कृ
तम् ॥ लोकनाथं विश्वनेत्रं सूर्यमावाहयाम्यहम् ॥ १ ॥ ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यं च ॥ हिरण्ययेनसवि
तारथेनदेवोयातिभुवनानिपश्यन् ॥ २ ॥ ॐभूर्भुवःस्वः कलिंगदेशोद्भव काश्यपसगोत्र भानो इहागच्छ इह तिष्ठ ॥ १ ॥ अथ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



आग्नेयामर्द्धचंद्राकारे श्वेतपुष्पाक्षतैश्चंद्रमावाहयेत् ॥ हिमरश्मिं निशानाथं तारकाभिः समन्वितम् ॥ औषधीनां तु राजानं सोममावाहयाम्यहम् ॥ १ ॥ ॐ इमंदेवाऽअसपत्नꣳसुवद्ध्वंमहतेक्षत्रायं महतेज्ज्यैष्ठ्यांय महतेजानंराज्यायेंद्रंस्येंद्रियायं ॥ इममुमुष्यंपुत्रममुष्यैपुत्रमस्यैविशएषवोंमीराजासोमोस्माकं ब्राह्मणानाꣳराजां ॥ २ ॥ ॐभूर्भुवःस्वः यमुनातीरदेशोद्भव आत्रेयसगोत्र चंद्र इहागच्छ इह तिष्ठ ॥ २ ॥ अथ याम्यां त्रिकोणे रक्तपुष्पाक्षतैर्भौममावाहयेत् ॥ धरणीगर्भसंभूतं लोहितांगं सुवर्चसम् ॥ कुमारं क्रूरकर्माणं भौममावाहयाम्यम् ॥१॥ ॐअग्निर्मूर्द्धादिवःकुकुत्पतिःपृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ २ ॥ ॐ भूर्भुवःस्वः अवंतिदेशोद्भव भारद्वाजसगोत्र भौम इहागच्छ इह तिष्ठ ॥ ३ ॥ ऐशान्यां धनुषाकारे पीतपुष्पाक्षतैर्बुधमावाहयेत् ॥ बुधं बुद्धिप्रदातारं सोमवंशविवर्द्धनम् ॥ यजमानहितार्थाय बुधमावाहयाम्यहम् ॥ १ ॥ ॐ उद्बुध्यस्वाग्नेप्रतिं जागृहित्वामिष्टापूर्तेसꣳसृंजेथामयंच ॥ अस्मिन्सधस्थेअध्युत्तंरस्मिन्विश्वेदेवायजंमानश्चसीदत ॥ २ ॥ ॐ भूर्भुवःस्वः मगधदेशोद्भव आत्रेयसगोत्र सिंहस्थबुध इहागच्छ इह तिष्ठ ॥ ४ ॥ ततः ॥ उत्तरे पंकजाकारे पीतपुष्पाक्षतैः गुरुमावाहयेत् ॥ बुद्धिश्रेष्ठोंगिरःपुत्रो देवानां यो गुरुः स्मृतः ॥ तमिंद्रमंत्रिणं भक्त्या गुरुमावाहयाम्यहम् ॥ १ ॥ ॐ बृहंस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुंमज्जनेंषु॥ यद्दीदयच्छवंसऽऋतप्रजाततदस्मासुद्रविंणंधेहिचित्रम् ॥ उपयामगृहीतोसिबृहस्पतंयेत्वैषतेयोनिर्बृहस्पतंयेत्वा ॥ २ ॥ ॐ भूर्भुवःस्वः सिंधुदेशोद्भव आंगिरसगोत्र बृहस्पते इहागच्छ इह तिष्ठ ॥ ५ ॥ पूर्वे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

चतुःकोणचक्रे श्वेतपुष्पाक्षतैःभृगुमावाहयेत् ॥ प्रविष्टो जठरे शंभोर्निसृतः पुनरेव यः ॥ तं सुरारिगुरुं भक्त्या शुक्रमावाहया म्यहम् ॥ १ ॥ ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमं प्रजापतिः ॥ ऋतेनंसत्यमिंद्रियंविपानंछशुक्रमंधसइंद्रस्यें द्रियमिदंपयोमृतंमधु ॥ २ ॥ ॐ भूर्भुवःस्वः भोजकटकदेशोद्भव भार्गवसगोत्र शुक्रेहागच्छ इह तिष्ठ ॥ ६ ॥ पश्चिमे दंडा कारमंडले कृष्णपुष्पाक्षतैः शनिमावाहयेत् ॥ धर्मराजानुजं देवं भिन्नांजनसमुद्भवम् ॥ छायामार्त्तंडसंभूतं शनिमावाह याम्यहम् ॥ १ ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवंतुपीतयें ॥ शंय्योरभिस्रवंतुनः ॥ २ ॥ ॐ भूर्भुवःस्वः सौराष्ट्रदेशोद्भव काश्यप सगोत्र शने इहागच्छ इह तिष्ठ ॥ ७ ॥ ततो नैर्ऋत्यां मकराकृतिचक्रे धूम्रपुष्पाक्षतैः राहुमावाहयेत् ॥ चक्रेण छिन्नमूर्द्धानं विष्णुना च रिरक्षितम् ॥ सैंहिकेयं महाकायं राहुमावाहयाम्यहम् ॥ १ ॥ ॐकयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ २ ॥ ॐभूर्भुवः स्वः राठिनापुरोद्भव पैठीनसगोत्र राहो इहागच्छ इहतिष्ठ ॥ ८ ॥ ततो वायव्यां खड्गाकार मंडले धूम्रपुष्पाक्षतैः केतुमावाहयेत् ॥ अंजनाभं महारौद्रं बहुरूपं महाग्रहम् ॥ क्रूरकर्ममहाकायं केतुमावाहयाम्यहम् ॥ १ ॥ ॐकेतुंकृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥२॥ ॐभूर्भुवःस्वः अंतर्वेदिसमुद्भव पैठीनसगोत्र केतो इहागच्छ इह तिष्ठ ॥९॥ एवं ग्रहानावाह्य ॐमनोजूतिर्जुषतामिति एषवैप्रतिष्ठानामयज्ञोयत्रैनेति च मंत्राभ्यां प्रतिष्ठां कृत्वा पूर्वोक्तवत्पाद्या दिभिः पूजयेत् ॥ अनेन पूजनेनैकतंत्रात्मकेन पूजिता नवग्रहाः सुतुष्टाः प्रीणंतु ॥ यो यस्याधिदेवता यश्च यस्य प्रत्यधिदेवता

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



सस तत्तत्समीपे स्थापनीयो वक्ष्यमाणमंत्रैः ॥ अथाधिदेवतानामावाहनम् ॥ मध्यस्थरविदक्षिणपार्श्वे श्वेतपुष्पाक्षतै रुद्रमावाहयेत् ॥ ॐत्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यंबकंयजामहेसुगंधिम्पतिवेदनम् ॥ उर्वारुकमिवबंधनादितोमुक्षीयमामुतः ॥ २ ॥ ॐभूर्भुवःस्वः शंभो इहागच्छ इह तिष्ठ ॥ १ ॥ आग्नेय्यां चंद्रस्य दक्षिणे रक्तपुष्पाक्षतैः उमामावाहयेत् ॥ ॐअंबेऽअम्बिकेंऽबालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकांकांपीलवासिनीम् ॥ २३ ॥ ८ ॥ ॐभूर्भुवःस्वः उमे इहागच्छ इह तिष्ठ ॥ २ ॥ याम्यां भौमस्य दक्षिणे पीतपुष्पाक्षतैः स्कंदमावाहयेत् ॥ ॐयदक्रंदः प्रथमंजायमानउद्यन्संमुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्त्यम्महिजाततेऽअर्वन् ॥ १ ॥ ॐभूर्भुवःस्वः स्कंद इहागच्छ इह तिष्ठ ॥ ३ ॥ ईशान्यां बुधस्य दक्षिणे पीतपुष्पाक्षतैर्विष्णुमावाहयेत् ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरे ॥ १ ॥ ॐभूर्भुवःस्वः विष्णो इहागच्छ इह तिष्ठ ॥ ४ ॥ उत्तरे गुरोर्दक्षिणे श्वेतपुष्पाक्षतैर्ब्रह्माणमावाहयेत् ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ १ ॥ ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छ इह तिष्ठ ॥ ५ ॥ पूर्वे शुक्रस्य दक्षिणे पीतपुष्पाक्षतैः इंद्रमावाहयेत् ॥ ॐत्रातारमिंद्रमवितारमिंद्रᳬहवेहवेसुहवᳬशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रᳬस्वस्तिनोमघवाधात्त्विंद्रः ॥ १ ॥ ॐभूर्भुवःस्वः इंद्र इहागच्छ इह तिष्ठ ॥६॥ पश्चिमे शनेर्दक्षिणे कृष्णपुष्पाक्षतैर्यममावाहयेत् ॥ ॐयमायत्वामखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सवितामध्वांनक्तु पृथिव्याःसुछंस्पृशंस्पाहि ॥ अर्चिरंसिशोचिरंसितपोंसि ॥ १ ॥ ॐभूर्भुवःस्वः यम इहागच्छ इह तिष्ठ ॥७॥
नैर्ऋत्यां राहोर्दक्षिणभागे धूम्रपुष्पाक्षतैः कालमावाहयेत् ॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिर
ग्मतसमोषधीभिरोषधीः ॥१॥ ॐभूर्भुवःस्वः काल इहागच्छ इह तिष्ठ ॥ ८ ॥ वायव्यां केतोर्दक्षिणे रक्तपुष्पाक्षतैश्चित्रगुप्तमावा
हयेत् ॥ ॐचित्रावसोस्वस्तितेपारमंशीय ॥१॥ ॐभूर्भुवःस्वः चित्रगुप्त इहागच्छ इह तिष्ठ ॥ ९ ॥ एवमधिदेवानावाह्य प्रतिष्ठां
च कृत्वा पाद्यादिभिः पूजयेत् ॥ कृतेनानेन पूजनेन सुतुष्टाः अधिदेवाः प्रीणंतु पूजिताः वरदा भवंतु ॥ अथ प्रत्यधिदेवतानामा
वाहनम् ॥ मध्यस्थसूर्यस्य वामे रक्तपुष्पाक्षतैः अग्निमावाहयेत् ॥ ॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवा २ँ ॥ आसादया
दिह ॥१॥ ॐभूर्भुवःस्वः अग्ने इहागच्छ इह तिष्ठ ॥१॥ आग्नेय्यां चंद्रस्य वामपार्श्वे श्वेतपुष्पाक्षतैर्जलमावाहयेत् ॥ ॐआपो
हिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥ ॐभूर्भुवःस्वः आप इहागच्छत इह तिष्ठत ॥ २ ॥ दक्षिणे भौम
पार्श्वे वामे रक्तपुष्पाक्षतैः भूमिमावाहयेत् ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ १ ॥
ॐभूर्भुवःस्वः पृथिव इहागच्छ इह तिष्ठ ॥ ३ ॥ ईशान्यां बुधस्य वामे पीतपुष्पाक्षतैर्विष्णुमावाहयेत् ॥ ॐइदंविष्णुर्विच
क्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांछंसुरे ॥ १ ॥ ॐ भूर्भुवःस्वः विष्णो इहागच्छ इह तिष्ठ ॥ ४ ॥ उत्तरे गुरोर्वामे पी
पुष्पाक्षतैः इंद्रमावाहयेत् ॐत्रातारमिंद्रमवितारमिंद्रछंहवेहवेसुहवछंशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रंछंस्वस्तिनोमघवा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





धात्विद्रः ॥ १ ॥ ॐ भूर्भुवःस्वः इंद्र इहागच्छ इह तिष्ठ ॥ ५ ॥ पूर्वे शुक्रस्य वामे पीतपुष्पाक्षतैः इंद्राणीमावाहयेत् ॥ ॐअदित्यैरास्नांसींद्राण्याउष्णीषः ॥ पूषासिंधर्म्मायदीष्व ॥ १ ॥ ॐभूर्भुवःस्वः इंद्राणि इहागच्छ इह तिष्ठ ॥ ६ ॥ पश्चिमे शनेर्वामे श्वेतपुष्पाक्षतैः प्रजापतिमावाहयेत् ॥ ॐप्रजापतेनत्व द्देतान्यन्योविश्वांरूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नो अस्तुवयछंस्यामपतयोरयीणाम् ॥ १ ॥ ॐ भूर्भुवःस्वः भो प्रजापते इहागच्छेह तिष्ठ ॥ ७ ॥ नैर्ऋत्यां राहोर्वामे कृष्णपुष्पाक्षतैर्नागमावाहयेत् ॥ ॐ नमोस्तुसर्पेभ्योयेकेच पृथिवीमनु ॥ ये अंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ १ ॥ ॐ भूर्भुवःस्वः अष्टौ नागा इहागच्छत इह तिष्ठत ॥ ८ ॥ वायव्यां केतोर्वामे श्वेतपुष्पाक्षतैर्ब्रह्माणमावाहयेत् ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसुतश्चयोनिमसतश्चविवः ॥ १ ॥ ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छेह तिष्ठ ॥ ९ ॥ एवं प्रत्यधिदेवानावाह्य प्रतिष्ठां कृत्वा च पाद्यादिभिः पूजयेत् ॥ अनेन पूजनेन पूजिताः प्रत्यधिदेवताः प्रीयंताम् यजमानस्याभयं कुर्वंतु ॥ अथ पंचलोकपानामावाहनम् ॥ ततो नैर्ऋत्यां राहोरुत्तरे पीतपुष्पाक्षतैर्गणपतिमावाहयेत् ॥ ॐ गणानांत्वेति ॥ ॐ भूर्भुवःस्वः गणपते इहागच्छ इह तिष्ठ ॥ १ ॥ पश्चिमे शनेरुत्तरे रक्तपुष्पाक्षतैर्दुर्गामावाहयेत् ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुं दुरितात्यग्निः ॥ १ ॥ ॐ भूर्भुवःस्वः श्रीपार्वति इहागच्छेह तिष्ठ ॥ २ ॥ मध्यस्थसूर्यस्योत्तरे पीतपुष्पाक्षतैर्वायुमावाहयेत् ॥ ॐ वातोवामनोवा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

गंधर्वाःसप्तविंꣳशतिः ॥ तेऽअग्नेश्वमयुंजुँस्तेअस्मिन्जवमादधुः ॥ १ ॥ ॐ भूर्भुवःस्वः वायो इहागच्छ इह तिष्ठ ॥ ३ ॥ पूर्वे शुक्रस्योत्तरे नीलपुष्पाक्षतैराकाशमावाहयेत् ॥ ॐ ऊर्ध्वाऽअस्यसमिधोभवन्त्यूर्ध्वाशुक्राशोचीꣳष्यग्नेः ॥ द्युमत्तमासुप्रतीकस्यसूनोः ॥ १ ॥ ॐभूर्भुवःस्वः आकाश इहागच्छेह तिष्ठ ॥ ४ ॥ नैर्ऋत्यां राहोरुत्तरे श्वेतपुष्पाक्षतैरश्विनावावाहयेत् ॥ ॐ यावांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतम् ॥ ॐ भूर्भुवःस्वः अश्विनौ इहागच्छतमिह तिष्ठतम् ॥ ॥ ५ ॥ एवं पंचलोकपानावाह्य प्रतिष्ठां कृत्वा पाद्यादिभिः पूजयेत् ॥ कृतेनानेन पूजनेन सुपूजिताः पंचलोकपालाः प्रीणंतु ॥ अथ दशदिक्पालानामावाहनम् ॥ पूर्वे इंद्रमावाहयेत् ॥ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरो महेशः ॥ संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ १ ॥ ॐ त्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ २ ॥ ॐभूर्भुवःस्वः इंद्र इहागच्छेह तिष्ठ ॥ १ ॥ आग्नेय्यामग्निमावाहयेत् ॥ एह्येहि सर्वैश्च मरुद्गणैश्च मुनिप्रवीरैरभितोऽभिजुष्टः ॥ तेजोबलालोकबलेन सार्द्धं रक्षाध्वरं नो भगवन्नमस्ते ॥ १ ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवा २ ॥ आसादयादिह ॥ २ ॥ ॐ भूर्भुवः स्वः अग्ने इहागच्छ इह तिष्ठ ॥२॥ याम्ये यममावाहयेत् ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ॥ शुभाशुभानां च विचारकर्ता रक्षाध्वरं नो भगवन्नमस्ते ॥ १ ॥ ॐ असियमोअस्यादित्योअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्त

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



आहुस्तेत्रीणिंदिविबंधनानि ॥ २ ॥ ॐ भूर्भुवः स्वः धर्मराज इहागच्छ इह तिष्ठ ॥ ३ ॥ नैर्ऋत्यां निर्ऋतिमावाहयेत् ॥ एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः ॥ ममाध्वरं पाहि शुभादिनाथं लोकेश्वरं त्वां प्रणमामि नित्यम् ॥ ॥१॥ ॐ असुन्न्वंतमयंजमानमिच्छस्तेनस्येत्यामन्न्विंहितस्करस्य ॥ अन्यमस्मदिच्छसातंऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ २ ॥ ॐ भूर्भुवः स्वः निर्ऋते० इ० ॥ ४ ॥ पश्चिमे वरुणमावाहयेत् ॥ एह्येहि यादोगणवारिधीनां गणेन मेघेन सहास्य रोषी ॥ विधाधरेंद्रामरगीयमान पाहित्वमस्मान्भगवन्नमस्ते ॥ १ ॥ ॐ इमंमेवरुणश्रुधी हवमद्याचमृडय ॥ त्वामवस्युराचके ॥ २ ॥ ॐ भू० वरुण इ० ॥ ५ ॥ वायव्ये वायुमावाहयेत् ॥ एह्येहि यज्ञे मम रक्षणाय मृगादिरूढः सुरसिद्धसंघैः ॥ प्राणाधिपो हव्यभुजः सहायो गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ ॐ वातोवामनोवागंधर्वासप्तविंᳫंशतिः ॥ तेअग्रेश्वमयुजुँस्तेअंस्मिन्नुवमादधुः ॥ २ ॥ ॐ भू० भो वायो इ० ॥ ६ ॥ उत्तरे कुबेरमावाहयेत् ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ॥ सर्वोषधीभिर्द्रविणैः सहैव गृहाण पूजां भगवन्नमस्ते ॥१॥ ॐ कविदंगयवमंतोयवंचिद्यथादात्यनुपूर्वंवियूय ॥ इहेहैषां कृणुहिभोजनानियेबर्हिषोनमउक्तिंयजंति ॥२॥ ॐ भू० कुबेर इ० ॥७॥ ऐशान्यामीशानमावाहयेत् ॥ एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगवरेण सार्द्धम् ॥ लोकेश भूतेश्वर यज्ञसंघौ गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ २ ॥ ॐ भू० ईशान इ० ॥ ८ ॥ निर्ऋतिवरुणयोर्मध्येअनंतमावाह



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

येत् ॥ एह्येहि पातालधरामरेंद्र नागाधिप किन्नरगीयमान ॥ रक्षोरगेंद्रामरलोकसार्द्धमनंत रक्षाध्वरमस्मदीयम् ॥ ॐ नमो
स्तुसुर्पेभ्योयेकेचंपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसुर्पेभ्योनमः ॥ २ ॥ ॐ भू० अनंत इ० ॥ ९ ॥ ईशानपूर्वयोर्मध्ये ब्रह्माण
मावाहयेत् ॥ एह्येहि विश्वाधिपते मुनींद्र लोकेन सार्द्धं पितृदेवताभिः ॥ सर्वस्य धाता त्वमनंतकीर्ती रक्षाध्वरं नः सततं शिवाय
॥१॥ ॐ ब्रह्मंजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसुतश्चयोनिमसतश्चविवः ॥ २ ॥ ॐ
भू० भो ब्रह्मन्निहागच्छेह तिष्ठ ॥ १० ॥ एवं दिक्पालानावाह्य प्राणप्रतिष्ठां कृत्वा पाद्यादिभिः पूजयेत् ॥ अनेन पूजनेन पूजि
ताः दिक्पालाः प्रीणंतु वरदा भवंतु ॥ अथ सर्वतोभद्रमंडलदेवपूजा ॥ विस्तृतकर्मणि सर्वतोभद्रमंडलदेवतानामावाहनम् ॥
तथाहि–मंडलमध्यकलशे ॐ ब्रह्मंजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसुतश्चयोनिम
सतश्चविवः ॥१॥ भो ब्रह्मन्निहागच्छ इहतिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव ॥१॥ ततः पूर्ववाप्यामिंद्रमावाहयेत्॥
इंद्रं वोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ १ ॥ भो इंद्र इहागच्छेह तिष्ठ ॥ २ ॥ ततः अग्नौ शृंखलायाम
ग्निमावाहयेत् ॥ ॐअग्निंदूतंवृणीमहेहोतारंविश्ववेदसम् ॥ अस्ययज्ञस्यसुक्रतुम् ॥ भो अग्ने इहागच्छ ॥ ३ ॥ ततो दक्षिणवा
पीमध्ये यममावाहयेत् ॥ ॐयमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ भो यम इहागच्छ इह
तिष्ठ ॥४॥ ततो नैर्ऋत्यां नैर्ऋतिशंखलायां निर्ऋतिमावाहयेत् ॥ ॐमोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ॥ यदीष्टतृष्णयासह ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.







भो निर्ऋते इहागच्छ इहतिष्ठ ॥ ५ ॥ ततः पश्चिमवाप्यां वरुणमावाहयेत् ॥ ॐतत्वांयामिब्रह्मणावंदमानस्तदाशास्तेयजमानोह विर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ भो वरुण इहागच्छ इह तिष्ठ ॥ ६ ॥ वायुसोमयोर्मध्य शृंखलायां वायुमावाहयेत् ॥ ॐवायो शुतंहरीणांयुवस्वपोष्याणाम् ॥ उतवातेसहस्रिणोरथआयांतुपाजसा ॥ भो वायो इहागच्छेह तिष्ठ ॥ ७ ॥ ततः उत्तरवाप्यां सोममावाहयेत् ॥ ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसं गथे ॥ सोमेहागच्छेह तिष्ठ ॥ ८ ॥ तत ईशानीशृंखलायामीशानमावाहयेत् ॥ ॐअभित्वादेवसवितरीशानंवार्य्याणाम् ॥ सदा वन्भागमीमहे ॥ भो ईशान इहागच्छेहतिष्ठ ॥ ९ ॥ ततो वायुसोमयोर्मध्यवल्ल्यां अष्टवसूनावाहयेत् ॥ ॐज्मयाअत्रवसवोरंति देवाउरावंतरिक्षेमर्जयंतःशुभ्राः ॥ अर्वाक्पथंउरुज्रयः कृणुध्वंश्रोतोदूतस्यजग्मुषोनोअस्य ॥ इत्यष्टवसूनावाहयामि स्था०॥१०॥ ततः सोमेशानयोर्मध्यवल्ल्यामेकादशरुद्रानावाहयेत् ॥ ॐआरुद्रासःइंद्रवंतः सजोषसोहिरण्यरथाः सुविनायगंतनः इयंवो अस्मत्प्रतिहर्यतेमतिस्तृष्णजेनदिवउत्साउदन्यवे ॥ एकादशरुद्रानावाहयामि स्थापयामि ॥११॥ इशानेंद्रयोर्मध्यवल्ल्यां द्वाद शादित्यानावाहयेत् ॥ ॐत्यांनुक्षत्रियांअवआदित्यान्याचिषामहे ॥ सुमृडीकांअभिष्टये ॥ इति द्वादशादित्यानावाहयामि स्थापयामि ॥ १२ ॥ तत इंद्राग्न्योर्मध्यवल्ल्यां अश्विनावावाहयेत् । ॐअश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् ॥ अर्वाग्रथंसमनसानियच्छतम् ॥ अश्विनावावाहयामि स्थापयामि ॥ १३ ॥ अग्नियमयोर्मध्यवल्ल्यां विश्वेदेवाना



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वाहयेत् ॥ ॐ ओमासश्चर्षणीधृतोविश्वेदेवासआगत ॥ दाश्वांसोदाशुषःसुतम् ॥ विश्वान्देवानावाहयामि स्थापयामि ॥ १४ ॥ यमनिर्ऋतिमध्यवल्ल्यां सप्त यक्षानावाहयेत् ॥ ॐअभीत्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंकविम्॥ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ सप्त यक्षानावाहयामि स्थाप० ॥ १५ ॥ निर्ऋतिवरुणमध्यवल्ल्यां सर्पानावाहयेत् ॥ ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयन्त्स्वः ॥ सर्पानावाहयामि स्थाप० ॥ १६ ॥ वरुणवाय्वोर्मध्यवल्ल्यां गंधर्वाप्सरस आवाहयेत् ॥ ॐअप्सरसांगंधर्वाणांमृगाणांचरणेचरन् ॥ केशीकेतस्यविद्वान्सखास्वादुर्मदिंतमः ॥ गंधर्वाप्सरस आवाहयामि स्थाप० ॥ ॥ १७ ॥ ब्रह्मसोमयोर्मध्यवल्ल्यां स्कंदमावाहयेत् ॥ ॐ यदक्रंदःप्रथमंजायमानऽउद्यन्त्समुद्रादुतवा पुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजाततेअर्वन् ॥ स्कंदमावाहयामि स्था० ॥ १८ ॥ ब्रह्मेशानयोर्मध्यपरिध्यां दक्षमावाहयेत् ॥ ॐअदितिर्ह्यजनिष्टदक्षयादुहितातव ॥ तान्देवाअन्वजायंतभद्राअमृतबंधवः ॥ दक्षमावाहयामि स्था० ॥ ॥ १९ ॥ ब्रह्मेंद्रयोर्मध्यपरिध्यां दुर्गामावाहयेत् ॥ ॐतामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टाम् ॥ दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमः ॥ दुर्गामावाहयामि स्था० ॥ २० ॥ ब्रह्माग्न्योर्मध्यपरिध्यां स्वधामावाहयेत् ॥ ॐ उदीरतामवरउत्परासउन्मध्यमाः पितरः सोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ स्वधामावाहयामि स्था० ॥ २१ ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ब्रह्मयमयोर्मध्यपरिध्यां मृत्युरोगानावाहयेत् ॥ ॐपरंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमा नःप्रजांरीरिषोमोतवीरान् ॥ मृत्युरोगानावाहयामि स्था० ॥ २२ ॥ ब्रह्मनिर्ऋत्योर्मध्यपरिध्यां गणपतिमावाहयेत् ॥ ॐग णानां त्वागणपतिꣳहवामहेकविंकवीनामुपमश्रवस्तमम् ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनः शृण्वन्नूतिभिः सीदसादनम् ॥ गणपतिमावाहयामि स्था० ॥ २३ ॥ ब्रह्मवरुणयोर्मध्यपरिध्यामप आवाहयेत् ॥ ॐ शन्नो देवीरभिष्टयआपो भवंतुपीत ये ॥ शंयोरभिस्रवंतुनः ॥ अप आवाहयामि स्था० ॥ २४ ॥ ब्रह्मवाय्वोर्मध्यपरिध्यां मरुतमावाहयेत् ॥ ॐमरुतोयस्यहिक्षये पाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥ मरुतमावाहयामि स्था० ॥ २५ ॥ ब्रह्मणः पादमूले कर्णिकाधः पृथिवीमावाहयेत् ॥ ॐस्योनापृथिवीनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ पृथिवीमावाहयामि० ॥ २६ ॥ पुनर्ब्रह्मणःपादमूलपार्श्वे सप्त नदीः आवाहयेत् ॥ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधुकावेरि मंडले स्थापयाम्यहम् ॥ सप्तनदी रावाहयामि० ॥ २७ ॥ पुनः ब्रह्मणः समंतात्सप्तसागरान्नाममंत्रे स्थापयेत् ॥ क्षारसागरमावाहयामि स्था० ॥ १ ॥ क्षीरसा० ॥ २ ॥ दधिसागरमा० ॥ ३ ॥ मधुसागरमा० ॥ ४ ॥ घृतसागरमा० ॥ ५ ॥ इक्षुसाग० ॥ ६ ॥ सुरासाग० ॥ ॥ ७ ॥ स्वादूदकसाग० ॥ २८ ॥ पुनः ब्रह्मणः पूर्वे मेरुं प्रणवादिनमोंतनाममंत्रेणावाहयेत् ॥ तस्मिन्मेरुमूर्ध्नि प्रधानावाहन मग्रे समस्तदेवतावाहनांते वक्ष्यामः ॥ पुनरीशाने श्वेतेंदौ नाममंत्रेण ऋग्वेदमावाहयामि स्था० ॥ आग्नेयेंदौ यजुर्वेदमावा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

हयामि स्था० ॥ नैर्ऋत्येंदौ सामवेदमा० ॥ वायव्येंदौ अथर्वणमा० ॥ अश्विन्यादिसप्तनक्षत्राणि पूर्वस्यां वामे भद्रे आवाहयामि स्था० ॥ पूर्वस्यां दक्षिणे विष्कुंभादिसप्तयोगानावाहयामि स्था० ॥ दक्षिणस्यां वामे भद्रे पुष्यादिसप्तभानि आवा० ॥ दक्षिणस्यां दक्षिणे भद्रे धृत्यादि सप्तयोगानावा० ॥ पश्चिमायां वामे भद्रे स्वात्यादिसप्तनक्षत्राण्यावाह० ॥ पश्चिमायां दक्षिणे भद्रे वज्रादिसप्तयोगानावाह० ॥ उत्तरस्यां वामे भद्रे अभिजिदादिसप्तभान्यावाह० ॥ साध्यादिषड्योगान्ध्रुवं च दक्षिणे भद्रे आ० ॥ मंडलबाह्यपरिधौ सोमोत्तरे गदामावाहयामि स्था० ॥ ईशानाद्बाह्यपरिधौ त्रिशूलमा० ॥ इंद्रात्पूर्वपरिधौ वज्रमावा० ॥ अग्नेराग्नेयपरिधौ शक्तिमा० ॥ यमाद्याम्यपरिधौ दंडमा० ॥ निर्ऋतेर्नैर्ऋतपरिधौ खड्गमा० ॥ वरुणाद्वारुणपरिधौ पाशमा० ॥ वायोः वायुपरिधौ अंकुशमा० ॥ एतानि नाममंत्रेणावाह्य ततोऽस्माद्द्वितीयपरिधौ उत्तरे गौतममा० ॥ ईशाने भरद्वाजमा० ॥ पूर्वे विश्वामित्रमा० ॥ आग्नेय्यां कश्यपमा० ॥ दक्षिणे जमदग्निमा० ॥ नैर्ऋत्यां वशिष्ठमा० ॥ पश्चिमेऽत्रिमा० ॥ वायव्यामरुंधतीमा० ॥ तद्बाह्यतृतीयपरिधौ पूर्वादिक्रमेणाष्टशक्तीर्नाममंत्रेणावा० ॥ पूर्वे ऐंद्रीमा० ॥ आग्नेय्यां कौमारीमा० ॥ दक्षिणस्यां ब्राह्मीमा० ॥ नैर्ऋत्यां वाराहीमा० ॥ पश्चिमस्यां चामुंडामा० ॥ वायव्यां वैष्णवीमा० ॥ उत्तरस्यां माहेश्वरीमा० ॥ ऐशान्यां वाराहीमा० ॥ ततस्त्रितीयपरिधौ उत्तरस्यां पंचमहाभूतानि नाममंत्रेणावाहयेत् ॥ पूर्वस्यां विश्वकर्माणमा० ॥ दक्षिणस्यामगस्त्यमावा० ॥ पश्चिमस्यां पितॄनावा० ॥ उत्तरस्यामष्टकुलपर्वतानावा० ॥ तत्रैव सिद्धांश्चावाहयेत् ॥ एवं मंडले देवानावाह्य ॐ मनोजूतिरिति एषवैइति च मंत्राभ्यां

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



प्राणप्रतिष्ठां च कृत्वा पाद्यादिभिरेकतंत्रेण मंडले आवाहनादि ताभ्यो देवताभ्य आसनार्थमक्षतान्समर्पयामि इत्यादि प्रकारेण पूजयेत् ॥ नतिं कुर्यात् ॥ पुनः नैर्ऋत्यां वास्तुदेवताशिखिपर्जन्यजयन्तादीनावाह्य प्रतिष्ठां च कृत्वा पूजयेत ॥ ततो वायव्यां चतुःषष्टियोगिनीरावाह्य प्रतिष्ठां कृत्वा पूजयेत् ॥ तत्रैव भैरवक्षेत्रपालान्मरुद्गणांश्च पूजयेत ॥ पूजनप्रकारं तु अग्रे वक्ष्यामः ॥ अथ ब्रह्मपार्श्वे मेरौ प्रधानमावाहयेत् ॥ तत्रादौ प्रथमं सर्वतोभद्रमंडलमध्ये ताम्रादिकलशस्थापनम् ॥ भूरसीति भूमिस्पर्शनम् ॥ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृंꣳहपृथिवींमाहिꣳसीः ॥ इति भूमिस्पर्शनम् ॥ मानस्तोकइतिगोमयस्पर्शः ॥ मानंस्तोकेतनयेमानुआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ मानोव्वीरान् रुद्रभामिनोवधीर्हविष्मंतःसदमित्त्वांहवामहे ॥ आजिघ्रेतिकलशस्थापनम् ॥ आजिघ्रकुलशंमह्यात्वाव्विशंत्विन्दवः ॥ पुनरूर्ज्जानिवर्तस्वसानः सुहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ ॐ वरुणस्योत्तमितिकलशे जलं पूरयेत ॥ ॐवरुणस्योत्तंभनमसिव्वरुणस्यस्कम्भसर्जनीस्थोव्वरुणस्यऽऋतसदंन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ वसोःपवित्रेतिकंठे वस्त्रवेष्टनम् ॥ ॐ व्वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुव्वसोःपवित्रेण शतधारेणसुप्वाकामधुक्षः ॥ याःफलिनीरितिपूगीफलम् ॥ याःफलिनीर्याऽअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वꣳहसः ॥ परिवाजेतिपंचरत्नानि ॥ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत ॥ दधद्रत्नानिदाशुषे ॥ याओषधी





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

रितिसर्वौषधीः ॥ याओषधीः पूर्वाजाताद्देवेभ्यस्त्रियुगंपुरामनैनुबभ्रूणामह७ंशतधामानिसप्तच ॥ गंधद्वारामितिगंधम् ॥ गंधं द्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ कांडात्इतिदूर्वाप्रक्षेपः ॥ कांडात्कांडात्प्ररोहंती परुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ अश्वत्थेवोनीतिपंचपल्लवाः ॥ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ स्योनापृथिवीइतिसप्तमृदः ॥ स्योनापृथिवीनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ हिरण्यगर्भः इतिमंत्रेण कलशे हिरण्यं दद्यात् ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमां कस्मै देवायहविषाविधेम ॥ धान्यमसीतिकलशे सप्तधान्यानि ॥ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवःसविताहिरण्यपाणिःप्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनांपयोसि ॥ श्रीश्चतेइतिपुष्पं कलशे निक्षिपेत ॥ धूरसीतिधूपं० ॥ अग्निर्ज्योतिरितिदीपं० ॥ पूर्णादर्विइतिमंत्रेण कलशे तंडुलपूरितमास्तृतपीतांबरं पूर्णपात्रं स्थापयेत् ॥ तस्योपरि स्वर्णनिर्मितलक्ष्म्यासहविष्णुप्रधानमूर्तिमग्न्युतारणं कृत्वा स्थापयेत् ॥ अस्यां मूर्तौ अवघातादिदोष परिहारार्थमग्न्युत्तारणमंगन्यासं देवतासान्निध्यार्थं प्राणप्रतिष्ठां च करिष्ये इतिसंकल्पः ॥ प्रथमं मूर्तिं ताम्रपात्रे स्थाप्य तदुपरि दुग्धधारां जलधारां च ददत् अग्निसूक्तं पठेत् ॥ तद्वह्निसूक्तपठनमेवाग्न्युत्तारणम ॥ ॐ समुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्य७ंशिवोभव ॥ १ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्य७ंशिवो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



भंव ॥ २ ॥ उपुज्मन्नुपंवेतुसेवंतरन्नदीष्वा ॥ अग्नेंपित्तमपार्मसिमंडूंकिताभिरागंहिसेमंनोंयुज्ञंपांवकवंर्णशिवंकृंधि ॥ ३ ॥
अपासिदन्न्ययंनछंसमुद्रस्यनिवेशंनम् ॥ अन्यांस्तेंअस्मत्तंपन्तुहेतयंः पावको अस्मभ्यंछंशिवोभंव ॥ ४ ॥ अग्ने
पावकरोचिषांमंद्रयांदेवजिह्वयां ॥ आदेवान्वंक्षियक्षिच ॥ ५ ॥ सनंः पावकदीदिवोग्नेंदेवा २ँ ॥ इहावंह ॥ उपंयज्ञंहविश्चंनः
॥ ६ ॥ पावकयायश्चितयंत्याकृपाक्षामंन्नुरुचउषसोनभानुना ॥ तूर्वंन्नयामुन्नेतंशस्यनूरणआयोघृणेनतंतृषाणोअजरंः ॥ ७ ॥
नमंस्तेहरंसेशोचिषेनमंस्तेअस्त्वर्चिषें ॥ अन्यांस्तें अस्मत्तंपंतुहेतयंःपावको अस्मभ्यंछंशिवोभंव ॥ ८ ॥ प्राणदाऽअंपा
नदाव्यांनदावंर्चोदावंरिवोदाः ॥अन्यांस्तेंअस्मत्तंपंतुहेतयंःपावकोअस्यभ्यंछंशिवोभंव ॥ ९ ॥ इत्यम्युत्तारणमंत्रान् वारद्वयं
पठन्दुग्धधारां जलजधारां च पातयेत् ॥ ततः पुरुषसूक्तेनांगन्यासः ॥ करयोः पादयोर्जानुनोः कट्योर्नाभौ हृदि
क्रमात्कंठे बाह्वोर्मुखे नेत्रे मूर्ध्नि वामांगतो न्यसेदिति क्रमः ॥ एवं देहे देवे चांगन्यासं कृत्वा पंचामृतेन स्नापयेत् ॥
तन्मंत्राः ॥ पयंःपृथिव्यांपयओषंधीषुपयोंदिव्यंतरिंक्षेपयोंधाः ॥ पयंस्वतीः प्रदिशंः सन्तुमह्यंम् ॥ इति पयसा स्नानम् ॥
ॐ दधिक्राव्णोंऽअकारिषंजिष्णोरश्वस्यवाजिनंः ॥ सुरभिनोमुखांकरत्प्रणुऽआयूंछंषितारिषत् ॥ इति दध्ना स्ना० ॥ ॐ घृतं
घृंतपावनः पिबतवसां वसापावानः पिबतांतरिंक्षस्यहविरसिस्वाहां ॥ दिशंःप्रदिशऽआदिशोंऽविदिशंउद्दिशोंदिग्भ्यःस्वाहां ॥
इतिघृतस्ना० ॥ ॐमधुवाताऽऋतायतेमधुंक्षरंतिसिंधंवः ॥ माध्वींर्नःसंन्त्वोषंधीः ॥ इति मधुना स्ना० ॥ ॐअपाछंरसमुद्वंयसछं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सूर्येसंतंर्ठंसुमाहितम् ॥ अपाठंरसंस्ययोरसुस्तंवोंगृह्णाम्युत्तममुपयामगृहीतोसींद्रांयत्वाजुष्टं गृह्णाम्येषतेयोनिरिंद्रांयत्वाजुष्टतमम् ॥ इति शर्करया स्नानम् ॥ ६ ॥ ततः शुद्धस्नानम् ॥ ॐ आपोहिष्ठामयोभुवस्तानंऊर्ज्जेदधातन ॥ महेरणांयचक्षसे ॥ ॥ १ ॥ योवः शिवतंमोरसुस्तस्यंभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माऽअरंगमामवोयस्यंक्षयायजिन्वथ ॥ आपोजनयंथाचनः ॥ ३ ॥ इति शुद्धोदकेन स्नात्वा कलशोपरि स्थाप्य प्राणप्रतिष्ठांकुर्यात् ॥ अस्य प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामाथर्वाणि छंदांसि क्रियामयवपुःप्राणख्या देवताः आंबीजं ह्रींशक्तिः क्रौंकीलकम् ॥ अस्यां मूर्त्तौ प्राणप्रतिष्ठापनेविनियोगः ॥ ॐ आं ह्रीं क्रौं अं यं रं लं वं शं षं सं हं ळं क्षं अः क्रौं ह्रीं आं हंसः सोहम् ॥ अस्यां मूर्त्तौ प्राणा इह प्राणास्तिष्ठंतु ॥ पुनर्मंत्रं पठित्वा अस्यां मूर्त्तौ जीव इह स्थितः पुनः अस्यां मूर्तौ सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहागत्य स्वस्तिसुखं चिरं तिष्ठंतु स्वाहा ॥ एवं प्राणप्रतिष्ठां कृत्वा षोडशोपचारेण पूजयेत् ॥ ॐ सुहस्रंशीर्षापुरुषः सहस्राक्षःसुहस्रंपात् ॥ सभूमिᳬंसुर्वतः स्पृत्त्वाऽत्यतिष्ठद्दशांगुलम् ॥ १ ॥ इत्यावाहनम् ॥ ॐ पुरुषऽएवेदᳬंसर्वंयद्भूतंयच्चंभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ इत्यासनम् ॥ ॐ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यविश्वांभूतानिंत्रिपादस्यामृतंदिवि ॥ ३ ॥ इति पाद्यम् ॥ ॐ त्रिपादूर्द्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥४॥ इत्यर्घम् ॥ ॐ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





ततोविराडंजायतविराजोऽअधिपूरुंषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ इत्याचमनीयम् ॥ ॐ तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यम् ॥ पशूस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥ ६ ॥ इति स्नानम् ॥ ॐ ततोविराडंजायत विराजोअधिपुरुंषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ७ ॥ इति स्नानांते आचमनम् ॥ ॐ तस्माद्यज्ञात्सर्वहुत ऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ८ ॥ इति वस्त्रम् ॥ वस्त्रांते आचमनम् ॥ ॐ तस्मादश्वा अजायंतयेकेचोभयादंतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ९ ॥ इत्युपवीतम् ॥ उपवीतांते आचमनम् ॥ ॐ तयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजंतसाध्याऋषयश्चये ॥ १० ॥ इत्यनुलेपनम् ॥ ॐ यत्पुरुषंव्यदधुःकति धाव्यकल्पयन् ॥ मुखंकिमस्यासीत्किंबाहूकिमूरूपादाउच्येते ॥११॥ इति पुष्पं तुलसीपत्रम् ॥ ॐ ब्राह्मणोऽस्यमुखमासीद्बाहू राजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्याᳬशूद्रोऽअजायत ॥ १२॥ इति धूपम् ॥ ॐ चंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १३ ॥ इति दीपम् ॥ ॐनाभ्याऽआसीदंतरिक्षᳬशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँअकल्पयन् ॥ १४ ॥ इति नैवेद्यम् ॥ नैवेद्यांत आचमनम् ॥ ॐ प्राणाय स्वाहा ॥ अपानाय स्वाहा व्यानाय स्वाहा ॥ उदानाय स्वाहा ॥ समानाय स्वाहा ॥ हस्तप्रक्षालनं मुखप्रक्षालनं मध्ये मध्ये आचमनीयम् ॥ पूगीफलं सकर्पूरं तांबूलं सुमनोहरम् ॥ पवित्रीकरणं नित्यं तांबूलं प्रतिगृह्यताम् ॥ १५ ॥ इति तांबूलं ऋतुफलं च समर्पयामि ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोस्यासीदाज्यंग्रीष्मइध्मः शरद्धविः ॥ १५ ॥ इति नमस्कारः ॥ ॐ सप्तास्या सन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुम् ॥ १६ ॥ इति प्रदक्षिणा ॥ ॐ यज्ञेनयज्ञमयज न्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकं महिमानःसचंतयत्रपूर्वेसाध्याः संतिदेवाः ॥ १७ ॥ इति दक्षिणा ॥ ततो आरार्तिकं पुष्पांजलिं नतिं च कुर्यात् ॥ शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥ प्रपन्नं पाहि मामीश भीतं मृत्यु ग्रहार्णवात् ॥ इति स्तुतिः ॥ कृतेनानेन प्रधानविष्णुपूजनेन श्रीमान् विष्णुः प्रीणातु पूजितो वरदो भवतु एवं प्रधानपूजनम् ॥ ततो वायव्यां चतुःषष्टियोगिनीः द्विपंचाशद्भैरवानेकोनपंचाशन्मितान्मरुद्गणान्स्था०॥ संकल्पः ॥ ॐतत्सदिति करिष्यमाण गृहप्रवेशशुभसंपादकवास्तुशांतिकर्मणि दुष्टबाधाप्रशमनार्थं गजाननादिमृगलोचनांतानां चतुःषष्टिदेवीनां द्विपंचाशद्भैरवाणा मेकोनपंचाशन्मरुद्गणानामावाहनस्थापनपूजनमहं करिष्ये ॥ हस्ते अक्षतान्गृहीत्वा ॐ गजाननमावाहयामि स्था० ॥ १ ॥ सिंहमुखीमा० ॥ २ ॥ गृध्रास्यामा० ॥ ३ ॥ काकतुंडिकामा० ॥ ४ ॥ उष्ट्रग्रीवामा० ॥ ५ ॥ हयग्रीवामा० ॥ ६ ॥ वाराहीमा० ॥ ७ ॥ शरभाननामा० ॥ ८ ॥ उलूकीमा० ॥ ९ ॥ शिवामा० ॥ १० ॥ मयूरीमा० ॥ ११ ॥ विकटा ननामा० ॥ १२ ॥ अष्टवक्रामा० ॥ १३ ॥ कोटराक्षीमा० ॥ १४ ॥ कुब्जामा० ॥ १५ ॥ विकटलोचनामा० ॥ १६ ॥ शुष्कोदरीमा० ॥ १७ ॥ ललज्जिह्वामा० ॥ १८ ॥ श्वदंष्ट्रामा० ॥ १९ ॥ वानराननामा० ॥ २० ॥ ऋक्षाक्षीमा० ॥ २१ ॥ केकराक्षीमा० ॥ २२ ॥ बृहत्तुंडामावाहयामि ॥ २३ ॥ सुराप्रियामा० ॥ २४ ॥ कपालहस्तामा० ॥ २५ ॥ रक्ता

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



क्षीमा० ॥ २६ ॥ शुकीमा० ॥ २७ ॥ श्येनीमा० ॥ २८ ॥ कपोतिकामा० ॥ २९ ॥ पाशहस्तामा० ॥ ३० ॥ दंडहस्तामा० ॥ ३१ ॥ प्रचंडामा० ॥ ३२ ॥ चंडविक्रमामा० ॥ ३३ ॥ शिशुघ्नीमा० ॥ ३४ ॥ पापहंत्रीमा० ॥ ३५ ॥ कालीमा० ॥ ३६ ॥ रुधिरपायिनीमा० ॥ ३७ ॥ वसाधयामा० ॥ ३८ ॥ गर्भभक्षामा० ॥ ३९ ॥ शवहस्तामा० ॥ ४० ॥ अंत्रमालिनीमा० ॥ ४१ ॥ स्थूलकेशीमा० ॥ ४२ ॥ बृहत्कुक्षिमा० ॥ ४३ ॥ सर्पास्यामा० ॥ ४४ ॥ प्रेतवाहनामा० ॥ ४५ ॥ दंदशूककरामा० ॥ ४६ ॥ क्रौंचीमा० ॥ ४७ ॥ मृगशीर्षामा० ॥ ४८ ॥ वृषाननामा० ॥ ४९ ॥ व्यात्तास्यामा० ॥ ५० ॥ धूमनिश्वासामा० ॥ ५१ ॥ व्योमैकचरणामा० ॥ ५२ ॥ ऊर्ध्वदृष्टिमा० ॥ ५३ ॥ तापिनीमा० ॥ ५४ ॥ शोषिणीदृष्टिमा० ॥ ५५ ॥ कोटरीमा० ॥ ५६ ॥ स्थूलनासिकामा० ॥ ५७ ॥ विद्युत्प्रभामा० ॥ ५८ ॥ बलाकास्यामा० ॥ ५९ ॥ मार्जारीमावाहयामि ॥ ६० ॥ कटपूतनामा० ॥ ६१ ॥ अट्टाट्टहासामा० ॥ ६२ ॥ कामाक्षीमा० ॥ ६३ ॥ मृगाक्षी ( मृगलोचना ) मावाहयामि स्थापयामि ॥ ६४ ॥ मनोजूतिरितिप्रतिष्ठां कृत्वा पाद्यादिभिः पूजयेत् ॥ भो देव्यः गजाननादिमृगलोचनांताः चतुःषष्टियोगिनीदेवताः पाद्यादिभिः सुपूजिताः सायुधाः सवाहनाः सपरिवारपुत्रपौत्रकलत्रादियुतस्य मम शांतिकर्त्र्यः पुष्टिकर्त्र्यः सुप्रसन्नाः वरदाः भवंतु ॥ इति नतिं कुर्यात् ॥ अथ द्विपंचाशद्भैरवान्पूजयेत् ॥ हस्ते अक्षतान्गृहीत्वा आवाहयेत् ॥ ॐअजराय नमः अजरमावाहयामि स्थापयामि ॥ १ ॥ ॐ इंद्रचोराय नमः इंद्रचोरमा० ॥ २ ॥ ॐ व्यापकाय नमः व्यापकमा० ॥ ३ ॥ ॐइंद्रमूर्त्तये नमः इंद्रमूर्तिमा० ॥ ४ ॥ ॐ मुक्ष्णाय

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नमः मुक्षणमा० ॥ ५ ॥ ॐकूष्मांडाय नमः कूष्मांडमा० ॥ ६ ॥ ॐवरुणाय नमः वरुणमा० ॥ ७ ॥ ॐवासुकाय नमः वासुकमा० ॥ ८ ॥ ॐ विमुक्ताय नमः विमुक्तमा० ॥ ९ ॥ ॐ सप्तकाय नमः सप्तकमा० ॥ १० ॥ ॐ लीलालोपाय नमः लीलालोपमा० ॥ ११ ॥ ॐ एकदंष्ट्राय नमः एकदंष्ट्रमा० ॥ १२ ॥ ॐ ऐरावताय नमः ऐरावतमा० ॥ १३ ॥ ॐ ओषधीघ्नाय नमः ओषधीघ्नमा० ॥ १४ ॥ ॐ बंधनाय नमः बंधनमा० ॥ १५ ॥ ॐ दिव्याकराय नमः दिव्याकरमा० ॥ १६ ॥ ॐकम्बलाय नमः कम्बलमा० ॥ १७ ॥ ॐ क्षोभणाय नमः क्षोभणमा० ॥ १८ ॥ ॐगवयवाय नमः गवयवमा० ॥ १९ ॥ ॐकालाय नमः कालमा० ॥ २० ॥ ॐ बलधराय नमः बलधरमा० ॥ २१ ॥ ॐमणवे नमः मणुमा० ॥२२॥ ॐचंद्रबाणाय नमः चंद्रबाणमा० ॥ २३ ॥ ॐ फटाटोपाय नमः फटाटोपमा० ॥२४॥ ॐजटिलाय नमः जटिलमा० ॥२५॥ ॐऋतवे नमः ऋतुमा० ॥ २६ ॥ ॐ घंटेश्वराय नमः घंटेश्वरमा० ॥ २७ ॥ ॐ विकटाय नमः विकटमा० ॥ २८ ॥ ॐ मणिमाय नमः मणिममा० ॥ २९ ॥ ॐ गुणबंधाय नमः गुणबंधमा० ॥ ३० ॥ ॐ डामराय नमः डामरमा० ॥ ३१ ॥ ॐ ठंठपणाय नमः ठंठपणमा० ॥ ३२ ॥ ॐ स्थविलाय नमः स्थविलमा० ॥ ३३ ॥ ॐ दंतुराय नमः दंतुरमावा० ॥ ॥ ३४ ॥ ॐ धनदाय नमः धनदमा० ॥ ३५ ॥ ॐ नागकर्णाय नमः नागकर्णमा० ॥ ३६ ॥ ॐ फोत्कराय नमः फोत्करमा० ॥ ३७ ॥ ॐ महादलाय नमः महादलमा० ॥ ३८ ॥ ॐ चीरकाय नमः चीरकमा० ॥ ३९ ॥ ॐ सिंहाय नमः सिंहमा० ॥ ४० ॥ ॐ मृगाय नमः मृगमा० ॥ ४१ ॥ ॐ यक्षाय नमः यक्षमा० ॥ ४२ ॥ ॐ मेघवाहनाय नमः मेघवा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



हनमा० ॥ ४३ ॥ ॐ तीक्ष्णौष्ठाय नमः तीक्ष्णौष्ठमा० ॥ ४४ ॥ ॐ अनलाय नमः अनलमा० ॥ ४५ ॥ ॐ सुक्रतवे नमः सुक्रतुमा० ॥ ४६ ॥ ॐ पुंधापाय नमः पुंधापमा० ॥ ४७ ॥ ॐ वक्रकाय नमः वक्रकमा० ॥ ४८ ॥ ॐ वाताय नमः वातमा० ॥ ४९ ॥ ॐ यापनाय नमः यापनमा० ॥ ५० ॥ ॐ बटुकाय नमः बटुकमा० ॥ ५१ ॥ ॐ भैरवाय नमः भैरवमावाहयामि स्थापयामि ॥ ५२ ॥ मनोजूतिरिति प्रतिष्ठाप्य पाद्यादिभिः पूजयेत् ॥ भोद्विपंचाशद्भैरवाः पाद्यादिभिः सुपूजिताः सुप्रसन्नाः वरदाः भवंतु ॥ एवं पाद्यादिभिः एकोनपंचाशन्मरुद्गणान्पूजयेत् ॥ एकोनपंचाशन्मरुद्गणेभ्यः पाद्यम् अर्घ्यम् आचमनं स्नानं वस्त्रं गंधं पुष्पं धूपं दीपं नैवेद्यम् आचमनीयं फलं दक्षिणां समर्पयामि ॥ एवं पाद्यादिभिरेकोनपंचाशन्मरुद्गणाः सुपूजिताः वरदाः भवंतु ॥ पश्चाद्वास्तुमंडलं गत्वा ॥ एकाशीतिपदं वास्तुं लिखितं कुंकुमेन च ॥ देवताः स्थापयेत्तत्र क्षालितैः शुभ्रतंडुलैः ॥ पीठं संपूज्य ॥ ॐसर्वज्ञानक्रियाशक्तिकमलासनाय योगपीठाय नमः ॥ इति पीठेऽपरिपुष्पाक्षतचंदनानि प्रक्षिपेत् ॥ तत्र ईशानकोणादारभ्य प्रदक्षिणक्रमेण प्रतिमासु तंडुलपंजेषु वा शिख्यादिपंचचत्वारिंशद्देवताः स्वस्वपदेषु प्रणवव्याहृतिभिः तत्तन्नाम्नाऽऽवाह्य प्रतिष्ठाप्य पाद्याचमनादिभिः पूजयेत् ॥ तद्यथा ॥ तत्रेशानकोणादारभ्याधोमुखपातितवास्तुपुरुषशिरःस्थाने ईशानकोणपदे कर्पूरधवलं वृषवाहनं शिखिनमेकपदम्—आवाहयामि देवेशं शंकरं शिखिरूपिणम् ॥ चतुर्हस्तं त्रिनेत्रं च स्रुक् शूलं दक्षिणे करे ॥ डमरुं स्रुवकं वामे स्वाहोमासहितं विभुम् ॥ आगच्छ त्वं शिखिन्देव क्षेत्रेस्मिन्सन्निधो भव ॥ ॐनमः शंभुवायचमयोभुवायचनमःशंकुरायचमयस्कुरायचनमःशिवायचशिवतरायच ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

इत्यावाह्य भो शिखिन् इहागच्छ ॥ शिखी कर्पूरधवलस्त्रिनेत्रो वृषवाहनः ॥ वरत्रिशूलहस्तश्च वास्तोः शिरसि संस्थितः ॥ ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐ भूर्भुवःस्वः शिखिन्निहागच्छ इह तिष्ठ ॐशिखिने नमः ॥ १ ॥ तद्दक्षिणपदे नेत्रैकपदे पर्जन्यमावाहयेत् ॥ आवाहयामि पर्जन्यं यादसां मुख्यनायकम् ॥ कुंभीरथसमारूढं पाशहस्तं वरप्रदम् ॥ ॐ शन्नोवातः पवताᳩंशन्नस्तपतुसूर्यः ॥ शन्नःकनिक्रदद्देवःपर्जन्योऽअभिवर्षतु ॥ १ ॥ इत्यावाह्य भोः पर्जन्य इहागच्छ इह तिष्ठ ॥ नौस्थस्तडित्वान्पर्जन्यो नानावर्णपरिप्लुतः ॥ ज्योतिर्भूतांबुवाहात्मा वास्तोर्दक्षे दृशि स्थितः ॥ ॐ महाँइंद्रोवज्रहस्तः षोडशीशर्मयच्छतु ॥ हंतु पाप्मानंयोस्मान्द्वेष्टि ॥ उपयामगृहीतोसिमहेंद्रायत्वैषतेयोनिर्महेंद्रायत्वा ॥ १ ॥ ॐभूर्भुवःस्वःपर्जन्य इहतिष्ठ ॐ पर्जन्याय नमः ॥ २ ॥ तद्दक्षिणपदे तदधःपदे च श्रोत्रे द्विपदं जयंतं ध्यात्वावाहयेत् ॥ आवाहयामि तं देवं महेंद्रतनयं प्रभुम् ॥ मुद्रिकाकंकणैर्युक्तं सर्वाभरणभूषितम् ॥ वरदाभयहस्तं च जयंतं पूजयाम्यहम् ॥ ॐ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयंतंत्वानुदेवामदंतु ॥ इति मंत्रेण भो जयंत इहागच्छ ॥ जटिलः श्मश्रुलः श्रांतः कमंडलक्षसूत्रभृत् ॥ जयंतोब्जासनो गौरो वास्तोर्दक्षश्रवस्थितः ॥ ॐ जीमूतस्येव भवति प्र० ॥ इति स्थापनम् ॥ ॐभूर्भुवःस्वः जयंत इहागच्छ इह तिष्ठ ॐ जयंताय नमः ॥ ३ ॥ तद्दक्षिणपदद्वये अंसे कुलिशायुधं ध्यात्वेंद्रमा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वाहयेत् ॥ एहि देव सहस्राक्ष देवारिबलसूदन ॥ ऐरावतसमारूढ शचीहृदयनंदन ॥ वज्रहस्त सुराध्यक्षमिंद्रमावाहयाम्यहम् ॥ ॐ आयात्विंद्रोवंसुउपनइहस्तुतःसंधुमादंस्तुशूरंः ॥ वावधानस्तविंषीर्यस्यंपूर्वीर्द्यौनक्षत्रमभिभूंतिपुष्यांत् ॥ भो इंद्र इहागच्छ इह तिष्ठ ॥ इंद्र ऐरावतारूढः पीतो दैत्यविमर्दकः ॥ कुलिशाक्षकरो वास्तोरंशस्थलसमाश्रितः ॥ ॐ इंद्रंश्वसुम्राड्वरुंणश्चरा ज्ञातौतेंभुक्षंचंक्रतुरग्रंएतम् ॥ तयोंरहमनुभुक्षंभंक्षयामिवाग्देवीजुंषाणासोमंस्यतृप्यतुसहप्राणेनुस्वाहा ॥ ॐ भूर्भुवःस्वः इंद्र इह तिष्ठ ॐइंद्राय नमः ॥ ४ ॥ तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्यमावाहयेत् ॥ आवाहयामि देवेशं भास्करं तिग्मतेजसम् ॥ कलिंगं काश्यपं रक्तं सप्ताश्वं सप्तरज्जुकम् ॥ द्विभुजं पद्महस्तं च त्रैलोक्यतिमिरापहम् ॥ सर्वसौख्यप्रदातारं कर्मसाक्षिणमी श्वरम् ॥ आगच्छ भगवन्सूर्य क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ बण्महांअंसिसूर्यबडांदित्यमहांअसि ॥ महस्तेंसुतोमंहिमापनस्य तेद्धादेवमहाँअंसि ॥ भो सूर्य अत्रागच्छ ॥ सूर्यो रक्तो गृहाध्यक्षो धृताब्जो द्विभुजः प्रभुः॥ सप्ताश्वरथगो भास्वान्वास्तोर्दक्षांस संस्थितः ॥ ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविताज्ज्योतिरुदयाऽअजंस्रम् ॥ तस्यंपूषाप्रंसुवेयांतिविद्वान्संपश्यन्विश्वाभुवंनानि गोपाः ॥ ॐभूर्भुवःस्वः सूर्य इहतिष्ठ ॐ सूर्याय नमः ॥ ५ ॥ प्रदक्षिणपदद्वये दक्षिणप्रबाहौ सत्यमावाहयेत् ॥ आवाहयामि तं सत्यं पुण्ययुक्तमकल्मषम् ॥ पद्महस्तं महाबाहुं वरदं निर्मलं शुभम् ॥ ज्ञानमुद्राधरं देवं चिंतितं ब्रह्म केवलम् ॥ आगच्छ देव सत्य त्वं क्षेत्रेस्मिन्सन्निधो भव ॥ ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणयाश्रद्धामाप्नोति श्रद्धयासत्यमाप्यते ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भो सत्य इहागच्छ ॥ सत्यो भूतहितो धर्म्मो वरदाभयपाणिकः॥प्रसन्नाब्जनिभो वास्तोर्दक्षबाहौ च संस्थितः॥ॐसत्यंचमेश्रद्धा चमेजगच्चमेधनंचमेयुञ्जेनंकल्पंताम् ॥ ॐभूर्भुवःस्वः सत्य इहतिष्ठ ॐ सत्याय नमः॥६॥तद्दक्षिणपदद्वये दक्षिणकूर्परे भृशमा०॥ आवाहयेहं भृशमादिदेवं संचारशीलं भुवनत्रयेपि ॥ एकेन हस्तेन वरं ददानमभीष्टदानं त्वपरेण तेन ॥ ॐआत्वांहार्ष मंतरंभूर्ध्रुवस्तिष्ठाविचावलिः ॥ विशंस्त्वासर्व्वावांछंतुमात्वद्राष्ट्रमाधिंभ्रशत् ॥ भो भृश इहागच्छ ॥ भृशः पुष्पविमा नस्थः सपुष्पेषुधनुःकरः ॥ गौरो नादरतः कामी यो वास्तोर्दक्षबाहुगः ॥ ॐ भायैदार्वाहारंप्रभायाअग्नेधंब्रध्नस्यंविष्टपायाभि षेक्तारंवर्षिष्ठायनाकायपरिवेष्टारंदेवलोकायपेशितारं मनुष्यलोकायप्रकरितारᳫंसर्वेभ्योलोकेभ्यऽउपसेक्तारमवऋत्यैवधायोपमं थितारंमेधाय ॥ वासःपल्पूलींप्रक्रामायरजयित्रीम् ॥ ॐ भूर्भुवःस्वः भो भृश इह तिष्ठ ॐ भृशाय नमः ॥ ७ ॥ तद्दक्षिण पदे बाहौ आकाशमेकपदमावाहयेत् ॥ आवाहये तमाकाशं विष्णोः पदमनंतकम् ॥ यत्र देवास्तथा यक्षा ग्रहाः सर्वे प्रति ष्ठिताः ॥ आगच्छ त्वं महाकाश क्षेत्रेस्मिन्संनिधो भव ॥ ॐयावांकशामधुमत्यश्विनासूनृतावती ॥ तयांयज्ञंमिमिक्षतम् ॥ उपयामगृहीतोऽस्यश्विभ्यांत्वैषतैयोनिर्माध्वीभ्यांत्वा ॥ भो आकाश इहागच्छ ॥ शंखचक्रधरं देवमसितं स्वस्तिकासनम् ॥ सशब्दं सर्वगं व्योम प्रबाहौ चैव संस्थितम् ॥ ॐघृतंघृतपावानःपिबतवसांवसापावानःपिबतांतरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशआदिशोविदिशउद्दिशादिग्भ्यःस्वाहा ॥ ॐभूर्भुवःस्वः आकाश इह तिष्ठ ॐ आकाशाय नमः ॥ ८ ॥ तद्दक्षि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





णपदे आग्नेयकोणे प्रबाहौ वायुमेकपदमावाहयेत् ॥ आवाहयामि देवेशं भूतानां देहधारिणम् ॥ आगच्छ भगवन्वायो क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐवायोयेतेंसहस्रिणोरथांसुस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ भो वायो इहागच्छ ॥ वायु र्धन्वी मृगारूढो जगत्प्राणश्चलो युवा ॥ अंकुशध्वजबिभ्राणः प्रवाहोर्दंडसंस्थितः ॥ ॐ वातोवामनोवागंधर्वाःसुप्तविंᳯ शतिः ॥ तेऽग्नेश्वमयुंजुंस्तेऽअस्मिन् जुवमादधुः ॥ ॐ भूर्भुवःस्वः वायो इह तिष्ठ ॐ वायवे नमः ॥ ९ ॥ मंडलदक्षिणभागे वायुपदाधःपदे मणिबंधे पूषणमेकपदमावाहयेत् ॥ आवाहयामि देवेशं पद्महस्तं वरप्रदम् ॥ रक्तवस्त्रपरीधानं विद्युद्वर्णं महा बलम् ॥ आगच्छ भगवन्पूषन्क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ पूषंतवव्रतेवयंनरिष्येमकदाचन ॥ स्तोतारस्तइहस्मसि ॥ ॐ भूर्भुवःस्वः पूषन्निहागच्छ ॥ महास्वनः शोणवर्णो द्विभुजाब्जकमंडलुः ॥ पूषा गजासनः शुभ्रो मणिबंधसमाश्रितः ॥ ॐ स्वयंभूरसिश्रेष्ठोरश्मिर्वर्चोदाअसिवर्चोमेदेहि ॥ सूर्यस्यावृत्तमन्वावर्ते ॥ ॐ भूर्भुवःस्वः पूषन्निह तिष्ठ ॐ पूष्णे नमः॥१०॥ तदधःद्विपदे दक्षिणपार्श्वे वितथमावाहयेत् ॥ आवाहयेत्तं वितथं पुराणं द्यावापृथिव्यंतरचारिणं च ॥ गृहाणपूजां चणकौद नाख्यां बलिं च गृह्णन्भगवन्नमस्ते ॥ ॐ तत्सूर्यस्यदेवत्वंतन्महित्वंमद्ध्याकर्तोर्विततᳯसंजभार ॥ यदेदयुक्तहरितःसधस्थादा द्रात्रीवासस्तनुतेसिमस्मै॥भो वितथ इहागच्छ॥कृष्णवर्णस्तु वितथः कलेरप्रतिमासनः॥मद्यमांसालयो रक्तकरश्चालस्थपार्श्वगः॥ ॐसविताप्रथमेहन्नग्निर्द्वितीयेवायुस्तृतीयऽआदित्यश्चतुर्थेचंद्रमाःपंचमऋतुःषष्ठे मरुतःसप्तमेबृहस्पतिरष्टमे ॥ मित्रोनवमेवरुणोद



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शुमइंद्रंएकादशेंविश्वेंदेवाद्वादशे ॥ ॐभूर्भुवःस्वःवितथ इह तिष्ठ ॐवितथाय नमः ॥ ११ ॥ तदधः पदद्वये दक्षिणपार्श्वे गृहक्षतं द्विपदमावाहयेत् ॥ आवाहयामि त्वां देव गृहक्षतसमाख्यक ॥ पूजां गृहाण देवेश मम स्वस्तिकरो भव ॥ ॐअक्षन्नमींमदंत ह्यवंप्रियाअंधूषत ॥ अस्तोंषतस्वभांनवोविप्रानाविंष्ठयामतीयोजान्विंद्रतेहरीं ॥ भो गृहक्षत इहागच्छ ॥ गृहक्षतः पाटलांगो गदासिवरचर्मभृत् ॥ पंचास्यवाहनः क्रूरो वास्तोर्दक्षकटिस्थितः ॥ ॐगृहमाविंभीतमावेंयध्वमूर्जंबिभ्रंतएमंसि ॥ ऊर्जं बिभ्रंद्वःसुमनाः सुमेधागृहानैमिमनंसामोदमानः ॥ ॐभूर्भुवःस्वः गृहक्षत इह तिष्ठ ॐगृहक्षताय नमः ॥ १२ ॥ तदधः पदद्वये दक्षिणोरुभागे द्विपदं यममावाहयेत् ॥ आवाहयामि देवेशं दक्षिणां दिशमाश्रितम् ॥ महिषे च समारूढमंजनाद्रिसमप्रभम् ॥ चित्रगुप्तसहायं तं दंडमुद्गरधारिणम् ॥ सप्तर्षिभिः समायुक्तं धर्माधर्मप्रवर्तकम् ॥ लोकसंयमनार्थाय किंकरैः परिवारितम् ॥ आगच्छ भगवन्धर्म क्षेत्रेस्मिन्संनिधो भव ॥ ॐयमायत्वांगिरस्वतेपितृमतेस्वाहां ॥ स्वाहांघर्मायस्वाहांघर्मःपित्रे ॥ भो यम इहागच्छ ॥ रक्ताक्षो महिषारूढो दंडपाशधरो यमः ॥ कर्मज्ञोऽञ्जनसंकाशो वास्तोर्दक्षिणसंश्रितः ॥ ॐयमायंत्वामखायंत्वा सूर्यस्यत्वातपंसे ॥ देवस्त्वांसवितामध्वांनक्तुपृथिव्याःसंस्पृंशस्पाहि ॥ अर्चिरंसिशोचिरंसितपोंसि ॥ ॐभूर्भुवःस्वः यम इहतिष्ठ ॐयमायनमः ॥ १३ ॥ तदधःपदद्वये दक्षिणजानुप्रदेशे गंधर्वं द्विपदमावाहयेत ॥ आवाहयामि गंधर्वं षड्विंशद्भाग तत्परम् ॥ वीणां गृहीत्वा हस्तेन तद्वादनरतं विभुम् ॥ अप्सरोगणसंकीर्णं नानागंधैश्च चर्चितम् ॥ गंधर्व त्वमिहागच्छ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



पूजेयं प्रतिगृह्यताम् ॥ ॐगंधर्वस्त्वांविश्वावसुःपरिंदधातुविश्वस्यारिंष्ट्यैयजमानस्यपरिधिरंस्यग्निरिडऽईडितः ॥ मित्रावरुणौ त्वोत्तरतःपरिंधत्तांध्रुवेणधर्मणाविश्वस्यारिंष्ट्यैयजमानस्यपरिधिरंस्यग्निरिडऽईडितः ॥ भो गंधर्व इहागच्छ ॥ सुष्ठुवेषः शिखी गौरो गंधर्वो ध्यानवच्छुचिः ॥ वीणाकमंधलुधरो वास्तोर्दक्षिणजानुगः ॥ ॐऋतुषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सुर सोमुदोनाम ॥ सनंइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ॐभूर्भुवःस्वः गंधर्व इह तिष्ठ ॐगंधर्वाय नमः ॥ १४ ॥ तदधः पदद्वये दक्षिणजंघायां भृंगराजं द्विपदमावाहयेत् ॥ आवाहयामि तं देवं भृंगराजं महाबलम् ॥ षट्पदैः सेव्यमानं च कुसुमामोदसंयुतम् ॥ आगच्छालिकुल त्वं हि क्षेत्रेस्मिन्संनिधो भव ॥ ॐसौरीबलाकाशार्गाःसृंजयः शयाकुस्तेमैत्रा सरंस्वत्यैशारिंःपुरुषवाक्श्वाविद्भौमीशार्दूलोवृकुःपृदांकुस्तेमुन्यवेसरंस्वतेशुकःपुरुषवाक् ॥ भो भृंगराज इहागच्छ ॥ सुनीलांगो महाकायः कुंकुमारुणविग्रहः ॥ खड्गखेटधरो वास्तोर्दक्षजंघासमाश्रितः ॥ ॐयमायत्वांगिरंस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्माय स्वाहाधर्मःपित्रे ॥ ॐभूर्भुवःस्वःभृंगराज इह तिष्ठ ॐभृंगराजाय नमः ॥१५॥ तदधःपदे दक्षिणस्फिचि मृगमेकपदमावाहयेत् ॥ मृगमावाहयिष्यामि शशांककृतचिह्नकम् ॥ कृष्णवर्णं चतुष्पादं श्वेतोदरविषाणकम् ॥ आगच्छ भगवन्नेण क्षेत्रेस्मिन्संनिधो भव॥ॐ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः॥यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वा ॥ भो मृग इहा गच्छ ॥ मृगः कृष्णो भूषितांगो वरदाभयमुद्रिकः ॥ वरासनश्चारुनेत्रो वास्तोर्दक्षिणस्फिक्स्थितः ॥ ॐ पुरुषमृगश्चंद्रमसो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

गोधाकालकादार्वाघाटस्तेवनस्पतीनांकुकुवाकः सावित्राहंᳬसोवातस्यनाक्रोमकरः कुलीपयस्तेकूपारस्येंद्रियैशल्यकः ॥ ॐ भूर्भुवः स्वः मृग इह तिष्ठ ॐ मृगाय नमः ॥ १६ ॥ तदधःपदे नैर्ऋत्यकोणे पादयोः पितृगणमेकपदमावाहयेत् ॥ पितॄनावाहयिष्यामि सोमपादीननुक्रमात् ॥ पिंगाक्षान्कपिलजटान्हस्ते कुशकमंडलून् ॥ दधानान् सितवस्त्राणि सितयज्ञोप वीतिनः ॥ गृह्णीयुः कृशरान्नं च पितॄन्संपूजयाम्यहम् ॥ ॐ उशंतस्त्वानिधामह्युशंतःसमिधीमहि ॥ उशन्नुशतआवहपितॄन्हवि षेअत्तवे ॥ भोः पितर इहागच्छत ॥ कुशपिंडधराः स्वस्थाः पितरः श्यामलांगकाः ॥ महोदराः सोमलोकवासिनो वा स्तुपादगाः ॥ ॐ पुनंतुमापितरःसोम्यासःपुनंतुमापितामहाःपुनंतुप्रपितामहाः ॥ पवित्रेणशतायुषा ॥ विश्वमायुर्व्यश्नवै ॥ ॐ भूर्भुवः स्वः पितरः इह तिष्ठत ॥ ॐ पितृभ्यो नमः ॥ १७ ॥ अथ मंडलपश्चिमभागे निर्ऋतिकोणोत्तरवामस्फिचिप्रदेशे दौवारिकमेकपदमावाहयेत् ॥ एह्येहि दौवारिक रक्षणाय द्वाराणि सर्वाणि च मंदिरस्य ॥ पैष्टं बलिं वासितदन्तकाष्ठं गृहाण पूजां भगवन्नमस्ते ॥ ॐ द्वेविरूपेचरतःस्वर्थेऽअन्यान्यावत्समुपधापयते ॥ हरिरन्यस्यांभवतिस्वधावान्शुक्रोऽअन्यस्यांददृशे सुवर्चाः ॥ ॐ स्थिरोभववीड्वंगआशुर्भववाज्यर्वन् ॥ पृथुर्भवसुषदस्त्वमग्नेःपुरीषवाहणः ॥ भो दौवारिक इहागच्छ ॥ दौवारिको वेत्रमुद्राधरो भूतिविभूषितः ॥ मुक्ताभपादुकारूढो वास्तोर्वामस्फिचि स्थितः ॥ ॐ द्वारोदेवीरन्वस्यविश्वेव्रतादंदतेअग्नेः ॥ उरुव्यचसोधाम्नापत्यमानाः ॥ ॐ भूर्भुवःस्वः दौवारिक इह तिष्ठ ॐ दौवारिकाय नमः ॥ १८ ॥ तदुत्तरपदोर्ध्वपदे वाम जंघायां सुग्रीवं द्विपदमावाहयेत् ॥ आवाहये तं कपिराजमुख्यं सुग्रीवराजं नभमंडलेऽस्मिन् ॥ पाषाणवृक्षौ दधतं कराभ्यां

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



गृहाण पूजां भगवन्नमस्ते ॥ ॐ नीलग्रीवाःशितिकंठादिव७रुद्राऽउपंश्रिताः ॥ तेषां७सहस्रयोजनेवधन्वानितन्मसि ॥ भो सुग्रीव इहागच्छ ॥ पद्मासनो हेमवर्णः सुग्रीवोऽध्वरगात्रभृत् ॥ द्विभुजः कामदो वास्तोर्वामजंघासमाश्रितः ॥ ॐ सुषुम्णः सूर्यरश्मिश्चंद्रमागंधर्वस्तस्यनक्षत्राण्यप्सुरसोबेकुरयोनाम ॥ सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ॐ भूर्भुवःस्वः सुग्रीव इहतिष्ठ ॐ सुग्रीवाय नमः ॥ १९ ॥ तदुत्तरपदद्वये वामजानुप्रदेशे पुष्पदंतं द्विपदमावाहयेत् ॥ आवाहयामि देवेशं पुष्पदंतं विनायकम् ॥ लंबोदरं महाकायं गजवक्त्रं चतुर्भुजम् ॥ सिद्धिबुद्धिसमायुक्तं सर्वविघ्नविनाशनम् ॥ पुष्पदंत समागच्छ पूजेयं प्रतिगृह्यमाम् ॥ ॐ नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमो गृत्सेभ्यो गृत्संपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमः ॥ भोः पुष्पदंत इहागच्छ ॥ पुष्पदंतोऽभ्रसंकाशः खगपक्षविराजितः ॥ महाबलो व्यालहस्तः श्रीवास्तोर्वामजानुगः ॥ ॐ ओषधीः प्रतिमोदध्वंपुष्पवतीःप्रसूवरीः ॥ अश्वाइवसजित्वरीर्वीरुधःपारयिष्णवः ॥ ॐ भूर्भुवःस्वः पुष्पदंत इह तिष्ठ ॐ पुष्पदंताय नमः ॥ २० ॥ तदुत्तर पदद्वये वामोरौ वरुणं द्विपदमावाहयेत् ॥ आवाहयामि देवेशं वरुणं जलनायकम् ॥ कुंभीरथसमारूढं श्वेताद्रिशिखरोपमम् ॥ पाशहस्तं महाबाहुं यादोगणसमन्वितम् ॥ आगच्छ वरुण त्वं हि क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ इमंमेवरुण श्रुधीहवं मद्याचमृडय ॥ त्वामवस्युराचके ॥ भो वरुण इहागच्छ ॥ वरुणो यादसां नाथो नक्रस्थः पाटलांशुकः ॥ शंखपाशधरः शुभ्रो वास्तोर्वामोरुसंश्रितः ॥ ॐ वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऋतसदन्यसि



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ॐ भूर्भुवःस्वः वरुण इह तिष्ठ ॐ वरुणाय नमः ॥ २१ ॥ तदुत्तरपदे वामपार्श्वे असुरं द्विपदमावाहयेत् ॥ असुर त्वं समागच्छ रक्षोगणसमन्वितः ॥ शक्तिशूलधरो नित्यं रक्ताक्षश्च महाबलः ॥ हिरण्यपाशभृद्देव पूजां स्वीकुरु मे प्रभो ॥ ॐ यमश्विनानमुंचेरासुरादधिसरस्वत्यसुनो दिंद्रि यार्य ॥ इमंतᳪशुक्रंमधुमंतमिंदुᳪसोमᳪराजानमिहभक्षयामि ॥ भो असुर इहागच्छ ॥ असुरो मेचकाभास कराला स्योंगवार्जितः ॥ सिंहारूढो वारुणाक्षो वास्तोर्वामकटिस्थितः ॥ ॐयेरूपाणिप्रतिमुंचमानाअसुराःसंतःस्वधयाचरंति ॥ परापुरोनिपुरोयेभरंत्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् ॥ ॐ भूर्भुवःस्वः असुर इह तिष्ठ ॐ असुराय नमः ॥ २२ ॥ तदुत्तरपदद्वये वामपार्श्वे शेषं द्विपदमावाहयेत् ॥ आवाहयामि देवेशं पातालतलवासिनम् ॥ सहस्रशिरसं नागं फणामणिविराजितम् ॥ कर्पूरपूरविशदं नागराजं महाबलम् ॥ परोपकारनिरतमनंतं विष्णुवाहनम् ॥ आगच्छ नागराज त्वं क्षेत्रेस्मिन्संनिधो भव ॥ ॐ याइषवोयातुधानानांयेवावनस्पतीᳪरनु ॥ येवावटेषुशेरंतेतेभ्यःसर्पेभ्योनमः॥ ॐ भूर्भुवःस्वः भोः शेष इहागच्छ ॥ शेषः कृष्णतनुः शूरो वरशूलेषुचापभृत् ॥ गृध्रपक्षः कृशो दीर्घो वास्तोर्वै वामपार्श्वगः ॥ ॐशन्नोदेवीरभिष्टयआपोभवंतु पीतये ॥ शंय्योरभिस्रवंतुनः ॥ ॐ भूर्भुवःस्वः शेष इह तिष्ठ ॐ शेषाय नमः ॥ २३ ॥ तदुत्तरोपरिपदाधस्थैकपदे वाममणिबंधे पापयक्ष्माणमेकपदमावाहयेत् ॥ आवाहयामि तं पापं नाम्ना यक्ष्मेतिविश्रुतम् ॥ निर्मांसं निर्घृणं चैव शक्तिपाणिं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



महाबलम् ॥ आगच्छ भगवन्पाप पूजां मे प्रतिगृह्यताम् ॥ ॐ एतत्तेरुद्रावसंतेनंपरोमूजवंतोतीहि ॥ अवततधन्वापिनाकावसुः कृत्तिवासाअहिंसन्नः शिवोतीहि ॥ भो यक्ष्मन्निहागच्छ ॥ पापयक्ष्मा धूम्रवर्णो गदावरदमुद्रिकः ॥ कपोतवाहनो वामे मणिबंधे समाश्रितः ॥ ॐबण्महाँअसिसूर्यबडादित्यमहाँअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाँअसि ॥ महाादेवानामसुर्य्यः पुरोहितोविभुज्योतिरदाभ्यम् ॥ ॐ भूर्भुवःस्वः पापयक्ष्मन्निह तिष्ठ ॐ पापयक्ष्मणे नमः ॥ २४ ॥ तदुत्तरतो वायव्यकोणपदे वामप्रवाहौ रोगमेकपदमावाहयेत् ॥ आवाहयामि तं रोगं वातादित्रिगुणात्मकम् ॥ त्रिपादं त्रिशिरो रक्तनेत्रं भस्मविभूषितम् ॥ लोकानां च सुखं देहि बलिभिर्घृतमोदकैः ॥ पूजां गृहाण भो रोग क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ द्रापेऽअंधसस्पतेदरिद्रंनीललोहित ॥ आसांप्रजानामेषांपशूनांमाभेर्म्मारोङ्मोचनःकिंचनाममत् ॥ भो रोग इहागच्छ ॥ रोगः पापधरो रक्तो दुरात्मा व्याधिसंग्रहः ॥ दुष्कर्ममर्दको वास्तोर्वामदोर्दंडसंस्थितः ॥ ॐ यद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्माातस्मादेनसोविश्वान्मुंचत्वंहसः ॥ ॐ भूर्भुवःस्वः रोग इह तिष्ठ ॐ रोगाय नमः ॥ २५ ॥ अथ मंडलोत्तरभागे वायव्यकोणपदोर्ध्वपदे वामबाहौ अहिमेकपदमावाहयेत् ॥ अहिमावाहयिष्यामि त्रैलोक्यांतरचारिणम् ॥ शेषवंशे समुद्भूतं चक्षुःकर्णमहीश्वरम् ॥ आगच्छ त्वं हि नागेंद्र क्षेत्रेस्मिन्सन्निधो भव ॥ ॐ अहिरिवभोगैःपर्य्येतिबाहुंज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वाव्वयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ भो अहे इहागच्छ ॥ अहिराजोऽब्जवच्छुभ्रः फणामणिविराजितः ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अक्षकुंडधरो वास्तोर्वामबाहौ च संस्थितः ॥ ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिंक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ॐ भूर्भुवःस्वः अहे इह तिष्ठ ॐ अहये नमः ॥ २६ ॥ तदूर्ध्वपदद्वये वामकूर्परे मुख्यं द्विपदमावाहयेत् ॥ आवाहयामि तं शैवं गणानां मुख्यनायकम् ॥ जटाजूटधरं सौम्यं शूलपट्टिशधारिणम् ॥ नमस्ते मुख्यदेवेश क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐअवतत्य धनुष्ट्वᳫंसहस्राक्षशतेषुधे ॥ निशीर्यशल्यानाम्मुखांशिवोनःसुमनांभव॥भो मुख्य इहागच्छ ॥ मुख्योऽसौविश्वकर्मातु वास्तुकुंभाक्षसूत्रधृक् ॥ निपुणस्तु तुलायस्थो वास्तुवामभुजाश्रितः ॥ ॐ मानंस्तोकेतनयेमानऽआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदमित्वांहवामहे ॥ ॐ भूर्भुवःस्वः मुख्य इह तिष्ठ ॐ मुख्याय नमः ॥ २७॥ तदूर्ध्वपदद्वये वामबाहौ भल्लाटं द्विपदमावाहयेत् ॥ आवाहयामि देवेशं भल्लाटं शिवरूपिणम् ॥ भिल्लवेशधरं कृष्णं धनुर्बाणासिधारिणम् ॥ भिल्लमोहनकर्तारं बर्हिपिच्छैस्त्वलंकृतम् ॥ आगच्छ भगवन्देव क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदे शं चतुष्पदे विश्वंपुष्टंग्रामेअस्मिन्ननातुरम् ॥ भो भल्लाट इहागच्छ ॥ भल्लाटश्चंद्रसंकाशो वरमुद्रागदाधरः ॥ हयपुत्रो वास्तुपुंसो वामदोर्मूलदेशगः ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ॐ भूर्भुवः स्वः भल्लाट इह तिष्ठ ॐ भल्लाटाय नमः ॥ २८ ॥ तदूर्ध्वपदद्वये वामप्रबाहावेव सोमं द्विपदमावाहयेत् ॥ आवाहयामि देवेशं शशांकं रजनीपतिम् ॥ क्षीरोदधिसमुद्भूतं हरमौलिविराजितम् ॥ सुधाकारं द्विजाधारं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





त्रैलोक्यप्रीतिकारकम् ॥ औषधाप्यायनकरं सोमं कंदर्पवर्द्धनम् ॥ आगच्छ भगवन्सोम क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ सोमोराजानमवंसेऽग्निमन्वारभामहे॥आदित्यान्विष्णुᳫंसूर्य्यंब्रह्माणंचबृहस्पतिᳫंस्वाहा ॥ भो सोम इहागच्छ ॥ सोमो नरविमानस्थो वरहस्तो गदाधरः ॥ गौरो महोदरः श्रीमान्वास्तोर्वामांससंस्थितः ॥ ॐ वय ᳫंसोमव्रतेतवमनस्तनुषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ ॐ भूर्भुवः स्वः सोम इहतिष्ठ ॐ सोमाय नमः ॥ २९ ॥ तदूर्ध्वपदद्वये वामांसे सर्पं द्विपदमावाहयेत् ॥ आवाहयेच्च तं नागं फणासप्तकसंयुतम् ॥ आगच्छोरगराजंस्त्वं क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ विष्णोर्नुकंवीर्य्याणिप्रवोचंयःपार्थिवानिविममेरजाᳫंसियोऽअस्कभायदुत्तरᳫंसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ भो सर्प इहागच्छ ॥ कुंभमालाधरो द्वाभ्यां चतुर्बाहुः फणामणिः ॥ सर्पो रक्तप्रभो वास्तोर्वाऽमोरुस्थलमाश्रितः ॥ ॐउरुᳫंहिराजावरुणश्चकारसूर्य्यायपंथामन्वेतवाऽउ ॥ अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाशः ॥ ॐभूर्भुवःस्वः सर्प इहतिष्ठ ॐसर्पाय नमः ॥ ३० ॥ तदूर्ध्वपदद्वये वामश्रोत्रे अदितिं द्विपदामावाहयेत् ॥ आवाहयामि तां देवीमदितिं देवमातरम् ॥ द्विभुजां पद्महस्तां च सर्वाभरणभूषिताम् ॥ कश्यपस्य प्रियां भार्यां सुरूपां वामलोचनाम् ॥ समागच्छादिते त्वं हि क्षेत्रेऽस्मिन्संनिधा भव ॥ ॐइडऽएह्यदितऽएहि काम्याऽएत ॥ मयिवःकामधरणंभूयात् ॥ भो अदिते इहागच्छ ॥ सूत्रवज्रांकुशाभीतीर्बिभ्राणा ख्यानभूषिता ॥ अदितिश्चारुगौरांगी वास्तोर्वामश्रुतिस्थिता ॥ ॐउतनोऽहिर्बुध्न्यःशृणोत्वजऽएकपात्पृथिवी



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

समुद्रः ॥ विश्वेदेवाऋतावृधोऋतुभिर्हवनश्रुतः। जुषन्तां युज्यं पयः ॥ ॐभूर्भुवःस्वःअदिते इहागच्छ ॐअदितये नमः ॥ ३१॥
तदूर्ध्वपदे वामनेत्रे दितिमेकपदामावाहयेत् ॥ दितिमावाहयिष्यामि दैत्यानां चैव मातरम् ॥ शुभ्रांगीं द्विभुजां चैव शूलपट्टिश
धारिणीम् ॥ अत्रागच्छ दिते त्वं हि क्षेत्रेऽस्मिन्संनिधा भव ॥ ॐअदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वेदेवा अदि
तिः पंचजना अदितिर्जातमदितिर्जनित्वम् ॥ भो दिते इहागच्छ ॥ दितिस्तु श्यामला खड्गधारिणी शूलधारिणी ॥ वृषासन्ना
वास्तुपुंसो वामलोचनसंस्थिता ॥ ॐहिरण्यरूपाउषसोविरोकऽउभाविन्द्राऽउदिथःसूर्यश्च ॥ आरोहतंवरुणमित्रगर्तंततश्चक्षाथा
मदितिंदितिंचमित्रोसिवरुणोसि ॥ ॐभूर्भुवःस्वः दिते इह तिष्ठ ॐदितये नमः ॥ ३२ ॥ ततः शिखिपदाधःस्थितकोण
पदे मुखे अप एकपदा आवाहयेत ॥ अप आवाहयिष्यामि सर्वदा वरदाः शिवाः ॥ आपस्त्वायांतु सततं पवित्रा मंगला
वराः ॥ समागच्छंतु आपो वै कुर्वंत्वस्मिन्हि संनिधिम् ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ भो
आप इहागच्छत ॥ आपो नीलाः पीतवस्त्रघनगाः पद्मभूषणाः ॥ अक्षाब्जपाशपात्राणि बिभ्रंत्यो वास्तुवक्त्रगाः ॥ ॐआपो
अस्मान्मातरःशुंधयन्तुघृतेनं नोघृतप्वःपुनंतु ॥ विश्वꣳहिरिप्रंवहंतिदेवीरुदिदाभ्यःशुचिरापूतऽएमि ॥ भो आप इह तिष्ठत
ॐअद्भ्यो नमः ॥ ३३ ॥ आग्नेयपदाधःकोणे पदे दक्षिणहस्ते सावित्रमेकपदमावाहयेत् ॥ हे सावित्र त्वमागच्छ सर्वध्वांतनिवा
रक ॥ पूजां गृहाण देवेश मया भक्त्या समर्पिताम् ॥ ॐहस्तंआधायंसविताबिभ्रदभ्रिंꣳहिरण्मयीम् ॥ अग्नेर्ज्योतिर्निचाय्यंपृ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ि्रुंयाऽअुद्धयाभंरदातुंष्टुभेनच्छंदंसांगिरस्वत् ॥ भो सावित्र इहागच्छ ॥ सावित्रो द्विभुजः पद्मगौरः पद्मासनस्थितः ॥ वेदपाठ
रतो नित्यं वास्तोर्दक्षकराश्रितः ॥ ॐउपयामगृंहीतोसिसावित्रोसिचनोधाश्चनोधाऽअंसिचनोमयिंधेहि ॥ जिन्वंयज्ञंजिन्वंपतिं
भगांयदेवायंत्वासवित्रे ॥ ॐभूर्भुवःस्वः भोःसावित्र इहतिष्ठ ॐसावित्राय नमः॥ ३४ ॥ नैर्ऋतिपितृगणोर्ध्वपदे मेढ्रे जयमेकपद
मावाहयेत् ॥ आवाहयामि तं देवं जयं यष्टिविधारकम्॥जय त्वं हि समागच्छ क्षेत्रेऽस्मिन्सं निधो भव॥ॐआषाढंयुयुत्सुपृतनासुप
प्रिंᳪस्वर्षामस्स्यांपप्रिंᳪस्वर्षामप्सांवृजिनस्यगोपांभरेषुजाᳪसुक्षितिᳪसुश्रवसंजयंतंत्वामनुमदेमसोम॥ भो जय इहागच्छ॥
जयो वज्रधरो देवो महोग्रोऽतुलविक्रमः ॥ पीतवर्णो गजारूढो वास्तोर्मेढ्रसमाश्रितः ॥ ॐ गोत्रभिदंगोविदंवज्रंबाहुं जयंतम
ज्मंप्रमृणंतमोजंसा ॥ इमᳪसंजाताऽअनुंवीरयध्वमिंद्रᳪसखायोऽअनुसᳪरंभध्वम् ॥ ॐ भूर्भुवःस्वः भो जय इह तिष्ठ
ॐ जयाय नमः ॥ ३५ ॥ वायव्यकोणपदे वामहस्ते रुद्रमेकपदमावाहयेत् ॥ आवाहयामि तं रुद्रं सर्वदा शंकरं विभुम् ॥
उमाधिष्ठितवामांगं वरदाभयहस्तकम् ॥ जटागंगाधरं सौम्यं कर्पूराद्रिसमप्रभम् ॥ आगच्छ भगवन् रुद्र क्षेत्रेस्मिन्संनिधो
भव ॥ ॐ अवंरुद्रमंदीमह्यवंदेवंत्र्यंबकम् ॥ यथांनोवस्यंसस्करद्यथांनुःश्रेयंसस्करद्यथांनोव्यवसाययांत ॥ भो रुद्र इहागच्छ ॥
रुद्रो गोस्थो जटी त्र्यक्षोऽरुग्वराभयसूत्रधृक् ॥ शुभ्रः कृत्त्यंबरो वास्तोर्वामपाणितलाश्रितः ॥ ॐयातेरुद्रशिवातनूरघोरापांप
काशिनी ॥ तयांनस्तन्वाशंतंमयागिरिंशंताभिचांकशीहि ॥ ॐ भूर्भुवःस्वः रुद्र इह तिष्ठ ॐ रुद्राय नमः ॥ ३६ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ततो मध्यसंलग्नोपरिस्थितपूर्वपदत्रये दक्षिणस्तने अर्यमणं त्रिपदमावाहयेत् ॥ अर्यमन् कुरु मे भद्रं संज्ञया सह सर्वदा ॥ गृहाणे मां मया दत्तां पूजां देव नमोस्तु ते ॥ ॐयद्द्यसूरउदितेरनांगामित्रोऽअर्य्यमा ॥ सुवातिसविताभगः ॥ भो अर्यमन्निहागच्छ ॥ अर्यमार्जुनवर्णस्तु दीप्तिमान् रथवाहनः॥ सुपद्ममाली खट्वांगी वास्तोर्दक्षस्तनस्थितः॥ ॐ अर्य्यमणंबृहस्पतिमिंद्रंदानायचोद यवाचंविष्णुꣳसरस्वतीꣳसवितारंचवाजिनꣳस्वाहा ॥ ॐ भूर्भुवःस्वः अर्य्यमन्निहतिष्ठ ॐ अर्यम्णे नमः ॥ ३७ ॥ तद्दक्षिणा ग्नेयकोणपदे दक्षिणहस्ते सवितारमेकपदमावाहयेत् ॥ आवाहये सवितृमंडलमध्यसंस्थं सप्ताश्ववाहनयुतं धृतपंकजं त्वाम् ॥ केयूरकुंडलविधारक देहि सौख्यं गृहाण पूजां भगवन्नमस्ते ॥ ॐ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुव ॥ भोः सवित इहागच्छ ॥ सविता जनिता विश्वं द्विबाहुररुणच्छविः ॥ रथगामी पद्मपाणिर्वास्तूदककरांगतः ॥ ॐ सवित्राप्रस वित्रासरस्वत्यावाचात्वष्ट्रारूपैः पुष्णापशुभिरिंद्रेणास्मेबृहस्पतिनाब्रह्मणावरुणेनौजसाग्निनातेजसासोमेनराज्ञाविष्णुनादशम्या देवतयाप्रसूतः प्रसर्पामि ॥ ॐ भूर्भुवःस्वः सवितरिह तिष्ठ ॐ सवित्रे नमः ॥ ३८ ॥ तदधो नैर्ऋत्यकोणे पदादुपरि पद त्रये जठरदक्षिणभागे विवस्वंतं द्विपदमावाहयेत् ॥ एह्येहि देव त्रिगुणात्मक त्वं हैमं समारुह्य तमोनुदन्वै ॥ हस्तद्वये वै धृत चक्रपद्म गृहाण पूजां भगवन्नमस्ते ॥ ॐ विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व ॥ श्रदस्मैनरोवचसेदधातनयदाशीर्दादंप तीवाममश्नुतः ॥ पुमान्पुत्रोजायतेविंदतेव्वस्वधाविश्वाहारपऽएधतेगृहे ॥ भोविवस्वन्निहागच्छ ॥ विवस्वान् द्विभुजः शोणद्युति



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





श्चंडश्च पंकजी ॥ कर्मसाक्षी रथी वास्तोः क्रोडदक्षिणभागगः॥ ॐमित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रवस्तमम् ॥ ॐभूर्भुवःसुवः विवस्वन्निह तिष्ठ ॐविवस्वते नमः ॥३९॥ तदधो नैर्ऋत्यकोणैकपदे मेढ्रे विबुधाधिपमेकपदमावाहयेत् ॥ एह्येहि वास्तोविबुधाधिप त्वंगजाधिरूढो मम रक्षणाय ॥ वराप्सरोभिश्च विवीज्यमानो गृहाण पूजां भगवन्नमस्ते ॥ ॐवसवोधिसूरिर्म्म घवाव्वसुपते वसुधावन्युयोधास्मद्वेषाᳬंसिविश्वकर्म्मणेस्वाहा ॥ भो विबुधाधिप इहागच्छ ॥ सहस्राक्षो गजारूढः पीतांगो विबुधाधिपः ॥ वज्रोत्पलकरः श्रीमान्वास्तोर्दक्षस्तनाश्रितः ॥ ॐ इंद्रंआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएंतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रम् ॥ ॐ भूर्भुवःस्वः विबुधाधिप इह तिष्ठ ॐ विबुधाधिपतये नमः ॥ ४० ॥ तदुत्तरपदत्रये जठरवामभागे मित्रं त्रिपदमावाहयेत् ॥ मित्र त्वमेह्येहि तमोपशांत्यै रत्नाब्जवज्रध्वजयुक्तहस्त ॥ श्यामोर्ध्वभागेऽर्धसितश्च रूपो यथामनःस्थो भगवन्नमस्ते ॥ ॐ मित्रोनऽएहिसुमित्रधऽइंद्रस्योरुमाविशदक्षिणमुशंन्नुशंतᳬस्योनःस्योनम् ॥ स्वानभ्राजाङ्घारेबंभारेहस्तकृशानवेतेवःसोमक्रयणास्तान्रक्षध्वंमावोदभन् ॥ भो मित्र इहागच्छ ॥ हलाब्जध्वजवज्राख्यहस्तो मित्रो हरिस्थितः ॥ ऊर्ध्वाधःश्यामगौरो वा वामपाण्यंगुलिस्थितः ॥ ॐ मित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रवस्तमम् ॥ ॐ भूर्भुवःस्वः मित्र इह तिष्ठ ॐ मित्राय नमः ॥ ४१ ॥ तदुत्तरैकपदे वामहस्ते राजयक्ष्माणमेकपदमावाहयेत् ॥ आवाहयामि तं देवं यक्ष्माणं राजसंज्ञकम् ॥ नानाव्याधिसमाकीर्णं रोगैश्च परिशोभितम् ॥ वामेन वरदं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

चैव दक्षिणेनाभयप्रदम् ॥ आगच्छ यक्ष्मन्भगवन्पूजेयं प्रतिगृह्यताम् ॥ ॐनाशुग्रित्रीबुलासुस्यार्शंसऽउप्रचितांमसि ॥ अथो शुतस्युयक्ष्मांणाम्याकारोरंसुिनाशंनी ॥ भो राजयक्ष्मन्निह तिष्ठ ॥ वरशक्तिधरो ब्रह्मचर्यवान्बर्हिवाहनः ॥ राजयक्ष्मा च नीलांगो वास्तोर्मेंढ्रसमाश्रितः ॥ ॐ इमंदेवाऽअसपत्नछंसुवद्धंमहतेक्षुत्रायंमहतेज्यैष्ठ्यांयमहुतेजानंराज्यायेंद्रंस्येंद्रियायं ॥ इममुमुष्यंपुत्रममुष्यैपुत्रमुस्यैविशएषवौंमीराजासोमोस्माकं ब्राह्मणानाछंराजा ॥ ॐ भूर्भुवःस्वः राजयक्ष्मन्निह तिष्ठ ॐराजयक्ष्मणे नमः ॥४२॥ तत्प्राक्पदत्रये वामहस्ततले पृथ्वीधरं त्रिपदमावाहयेत् ॥ पृथ्वीधर त्वं मम मंडलेस्मिन्नाधारभूतो जगतीतलस्थः ॥ गृहे सुखं देहि सुखप्रद त्वं गृहाण पूजां भगवन्नमस्ते ॥ ॐ स्योनापृथिविनोभवानृक्षुरानिवेशंनी ॥ यच्छांनुःशर्म्मसुप्रथाः ॥ भो पृथ्वीधर इहागच्छ ॥ सहस्रवदनः श्रीमाञ्छंखचक्राक्षकुंभभृत् ॥ नीलपृथ्वीधरो वास्तोर्दक्ष हस्तांगुलिस्थितः॥ ॐ यद्ग्रामेयदरंण्येयत्सुभायांयदिंद्रिये ॥ यदेनश्चकृमावुयमिदंतदवंयजामहेस्वाहां ॥ ॐ भूर्भुवःस्वः पृथ्वी धर इह तिष्ठ ॐ पृथ्वीधराय नमः ॥ ४३ ॥ तदुपरि एकपदे वक्षःस्थले आपवत्समेकपदमावाहयेत् ॥ आपवत्स त्वमेह्येहि कूर्मस्कंध वरप्रद ॥ पूजां गृहाण देवेश कुंभहस्त नमोस्तु ते ॥ ॐ आतैंवत्सोमनोंयमत्परंमाच्चित्सुधस्थांत् ॥ अग्नेत्वांकां मयागिरा ॥ भो आपवत्स इहागच्छ ॥ आपवत्सो महातेजा द्विभुजः सिंहवाहनः ॥ वरपाशधरो गौरो वास्तोर्व क्षसि संस्थितः ॥ ॐ आपोहिष्ठामंयोभुवस्तानंऊर्जेदंधातन ॥ महेरणांयुचक्षंसे ॥ ॐ भूर्भुवःस्वः आपवत्स इह

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तिष्ठ ॐ आपवत्साय नमः ॥ ४४ ॥ मध्ये नवपदे वास्तोर्हृदये ब्रह्माणं नवपदमावाहयेत् ॥ अवाहयामि देवेशमूर्द्ध्वभागे व्यवस्थितम् ॥ हंसयुक्तसमारूढं सूर्यकोटिसमप्रभम् ॥ चतुर्मुखं चतुर्बाहुं चतुर्वेदसमन्वितम् ॥ पुस्तकं चाक्षसूत्रादिदधानं च कमंडलुम् ॥ विश्वकर्माख्यनामानं देवतागणपूजितम् ॥ आगच्छ भगवन्ब्रह्मन्क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहारथोजायतांदोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरंधिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतांनिकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यंतांयोगक्षेमोनःकल्पताम् ॥ भो ब्रह्मन्निहागच्छ ॥ चतुर्मुखोऽरुणो ब्रह्माऽक्षमालास्रुवतोयभृत् ॥ लंबोदरो हंसरथः श्मश्रुलो वास्तुहृत्स्थितः ॥ ॐ ब्रह्मजज्ञानं प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐ भूर्भुवः स्वः ब्रह्मन्निह तिष्ठ ॐ ब्रह्मणे नमः ॥ ४५ ॥ ततो मंडलस्य बाह्ये ईशानादिकोणेषु क्रमेण चरकीं १ विदारीं २ पूतनां ३ पापराक्षसीं ४ पूजयेत् ॥ तद्यथा ॥ अहमावाहयिष्यामि चरकीं नाम राक्षसीम् ॥ अंकुशं डमरुं शंखं कुंडलं चापि बिभ्रतीम् ॥ आगच्छ चरकि त्वं हि पूजेयं प्रतिगृह्यताम् ॥ ॐ यंतेदेवीनिर्ऋतिराबबंधपाशंग्रीवास्वविचर्त्यम् ॥ तत्तेविष्याम्यायुषोनमद्ध्यादथैतंपितुमद्धिप्रसूतः ॥ नमोभूत्यैदंचकार ॥ ॐ भूर्भुवःस्वः चरकि इहागच्छेह तिष्ठ ॐ चरक्यै नमः ॥ १ ॥ आग्नेय्यांविदारीमावाहयेत् ॥ आवाहयामि तां दैत्यां बिडालीसदृशाननाम् ॥ विशालरोममांसाढ्यां चापबाणधरांबराम् ॥ विदारि त्वमिहागच्छ पूजेयं प्रतिगृह्य



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ताम् ॥ ॐ अक्षुराजायंकितवंकृतायादिनवदर्शंत्रेतायैकल्पितंद्वापरायाधिकल्पिनंमास्कंदायंसभास्थाणुंमृत्यवेंग्गोव्यच्छमंतंका
यगोघातंक्षुधेयोगांविकृंततंभिक्षमाणउपतिष्ठंतिदुष्कृतायचरकाचार्यंपाप्मनेंसैलगम् ॥ ॐ भूर्भुवःस्वः विदारि इहागच्छेह तिष्ठ
ॐ विदार्य्यै नमः ॥२॥ ततो नैर्ऋत्यां पूतनामावाहयेत् ॥ पूतने त्वमिहागच्छ राक्षसीगणसंयुते ॥ मया निवेदितां पूजां गृहाण
वरदा भव ॥ ॐइंद्रस्यक्रोडोदित्यैपाजस्यन्दिशांजत्रवोदित्यैभसज्जीमूतान्हृदयौपशेनांतरिक्षम्पुरीततानभंऽउदर्येणंचक्रवाकौमतं
स्नाभ्यांदिवंवृक्काभ्यांगिरीन्प्लाशिभिरुपलान्प्लीन्हावल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मांहिराभिःस्रवंतीर्ह्रदान्कुक्षिभ्यांसमुद्रमुद
रेणवैश्वानरंभस्मंना ॥ ॐभूर्भुवः स्वः पूतने इहागच्छेह तिष्ठ पूतनायै नमः ॥३॥ अथ वायव्ये पापराक्षसीमावाहयेत् ॥ अहमा
वाहयिष्यामि राक्षसीं पापपूर्विकाम् ॥ रक्ताननां धूम्रवस्त्रां राक्षसीगणसंयुताम् ॥ राक्षसि त्वमिहागच्छ पूजेयं प्रतिगृह्यताम् ॥
ॐयस्यांस्तेघोरआसंजुहोम्येषांबंधानांमवसर्जनाय ॥ यांत्वाजनोभूमिरितिप्रमंदतेनिर्ऋतिन्त्वाहम्परिवेदविश्वतः॥ ॐभूर्भुवःस्वः
पापराक्षस्यै नमः ॥४॥ पूर्वदक्षिणपश्चिमोत्तरदिक्षु क्रमेण स्कंदम् १ अर्यमणं २ जृंभकं ३ पिलिपिच्छम् ४ आवाहयेत् ॥ तथाहि ॥
आवाहयामि देवेशं षण्मुखं कृत्तिकासुतम् ॥ रुद्रतेजस्समुत्पन्नं देवसेनासमन्वितम् ॥ मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारि
णम् ॥ आगच्छ भगवन्स्कंद क्षेत्रेस्मिन्संनिधो भव ॥ ॐ यत्र बाणाःसंपतति कुमाराविशिखाइंव ॥ तन्नऽइंद्रोबृहस्पतिरदितिः
शर्म्मयच्छतुविश्वाहाशर्मयच्छतु ॥ ॐभूर्भुवःस्वः स्कंद इहागच्छेह तिष्ठ ॐस्कंदाय नमः ॥ १. ॥ दक्षिणे अर्यमणमावाह

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.







येत् ॥ आवाहयामि देवेशमर्यमणं पितृनायकम् ॥ महिषं दिव्यमारूढं दंडपाणिं शुभेक्षणम् ॥ १ ॥ कर्मणां फलदातारं लोकानां कर्मसाक्षिणम् ॥ एहि त्वमर्यमन्देव क्षेत्रेस्मिन्संनिधो भव ॥ २ ॥ ॐयदुद्यसूरउदितेरनागामित्रोऽअर्य्यमा ॥ सुवार्ति सविताभगः ॥ ॐभूर्भुवःस्वः अर्यमन्निह तिष्ठ ॐअर्य्यम्णे नमः ॥ २ ॥ पश्चिमे जृंभकमावाहयेत् ॥ आवाहये तं प्रचुरं च मुख्यं जृंभायमाणं वरखड्गहस्तम् ॥ प्रत्यग्दिशायां च सुरक्षणीयमत्रैव वासं कुरु जृंभक त्वम् ॥ ॐहिङ्कारायस्वाहाहिङ्कृतायुस्वाहाक्रंदतेस्वाहावक्रंदायस्वाहाप्रोथतेस्वाहाप्रप्रोथायस्वाहागंधायस्वाहाघ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहा संदितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृंभमाणाय स्वाहाविचृंतायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा ॥ ॐभूर्भुवःस्वः जृंभक इह तिष्ठ ॐजृंभकाय नमः ॥ ३ ॥ उत्तरे पिलिपिच्छमावाहयेत् ॥ आवाहये तं पिलिपिच्छकं च मयूरपिच्छानि विधारयंतम् ॥ वामे तु हस्ते धनुरादधानं बाणं दधानं त्वितरे तु हस्ते ॥ ॐकास्विदासीत्पूर्व्वचित्तिःकिꣳस्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिला कास्विदासीत्पिशंगिला ॥ ॐभूर्भुवःस्वः पिलिपिच्छ इह तिष्ठ ॐपिलिपिच्छाय नमः ॥ ४ ॥ एवं प्रागादिदिक्षु गणेशं १ दुर्गां २ वायुं ३ बीभत्सं ४ यथानुक्रमेण स्थापयेत् ॥ पूर्वे गणेशाय नमः गणेशं स्थापयामि ॥ १ ॥ दक्षिणे दुर्गायै नमः दुर्गां स्थापयामि ॥ २ ॥ पश्चिमे वायवे नमः वायुं स्थापयामि ॥ ३ ॥ उत्तरे बीभत्साय नमः बीभत्सं स्थापयामि ॥ ४ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

एवं तथालोकपालचतुष्टयं स्थापयेत् ॥ पूर्वे उग्रसेनाय नमः उग्रसेनं स्थापयामि ॥ १ ॥ दक्षिणे डामराय नमः डामरं स्थापयामि ॥ २ ॥ पश्चिमे महाकालाय नमः महाकालं स्थापयामि ॥ ३ ॥ उत्तरे अश्विभ्यां नमः अश्विनौ स्थापयामि ॥ ॥ ४ ॥ पूर्वाद्यष्टदिक्षु ॥ इन्द्रस्त्वग्निर्यमश्चैव निर्ऋतिर्वरुणस्तथा ॥ वायुः सोमश्च रुद्रश्च इत्यष्टौ दिशिदेवताः ॥ १ ॥ तद्यथा–पूर्वे इन्द्रमावाहयेत् ॥ चतुर्दंतगजारूढो वज्रपाणिः पुरंदरः ॥ प्राचीपतिस्तु धातव्यो नानाभरणभूषितः ॥ ॐत्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिऽशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवांधात्विंद्रः ॥ ॐभूर्भुवः स्वः पूर्वे इन्द्रमावाहयामि ॥ भोः इंद्र इहागच्छेह तिष्ठ ॐइन्द्राय नमः ॥ १ ॥ अग्निकोणेऽग्निमावाहयेत् ॥ पिंगलः श्मश्रुकेशाक्षः पिंगाक्षो जटिलोऽरुणः ॥ छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः ॥ ॐ त्वन्नो अग्नेवरुणस्यविद्वान्देवस्यहेडोऽवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवः स्वः अग्निमावाहयामि ॥ भोः अग्ने इहागच्छेह तिष्ठ ॐअग्नये नमः ॥ २ ॥ दक्षिणे यममावाहयेत् ॥ ईषत्पीतो यमो ध्येयो दंडहस्तो विजानता ॥ १ ॥ ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐ भूर्भुवः स्वः यममावाहयामि ॥ भो यम इह तिष्ठ ॐ यमाय नमः ॥ ३ ॥ अथ नैर्ऋत्ये निर्ऋतिमावाहयेत् ॥ रक्तदृक्पाशधृक्क्रुद्धो निर्ऋतिर्विकृताननः ॥ पुंस्थितः खड्गहस्तश्च भूतवान् राक्षसप्रियः ॥ ॐ असुन्वंत

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



मयजंमानमिच्छस्तेनस्येत्यामन्विंहितस्कंरस्य ॥ अुन्यमुस्मदिंच्छुसातंइत्यानमोंदेवि निर्ऋतेतुभ्यंमस्तु ॥ ॐ भूर्भुवः स्वः
निर्ऋतिमावाहयामि ॥ भो निर्ऋते इहागच्छेह तिष्ठ ॐ निर्ऋतये नमः ॥ ४ ॥ अथ पश्चिमे वरुणमावाहयेत् ॥ वरुणः पाश
भृत्सौम्यः प्रतीच्यां मकराश्रितः ॥ आवाहयामि वरुण क्षेत्रेऽस्मिन्सन्निधौ भव ॥ ॐतत्वांयामिब्रह्मणावंदंमानुस्तदाशांस्तेयजं
मानोहंविर्भिः ॥ अहेंडमानो वरुणेहबोध्युरुंशठंसुमानुऽआयुःप्रमोंषीः ॥ ॐ भूर्भुवःस्वः वरुणमावाहयामि ॥ भो वरुण इहाग
च्छेहतिष्ठ ॐ वरुणाय नमः ॥ ५ ॥ अथ वायव्ये वायुमावाहयेत् ॥ धावन्हारिणपृष्ठस्थो ध्वजधारी समीरणः ॥ वरदान
करो धूम्रवर्णः कार्यो विजानता ॥ ॐ आनोंनियुद्भिःशुतिनींभिरध्वुरठंसंहुस्रिणींभिरुपंयाहियुज्ञम् ॥ वायाऽस्मिन्सवंनेमा
दयस्वयूयंपातस्वुस्तिभिःसदांनः ॥ ॐ भूर्भुवःस्वः वायो इहागच्छेह तिष्ठ ॐ वायवे नमः ॥ ६ ॥ उत्तरे कुबेरमावाहयेत् ॥
दशाश्वरथगः सोमो गदाधारी नृरूपधृक् ॥ उदीचीदिक्संप्रविष्टः कुबेरः पातु सर्वदा ॥ ॐ वुयठंसोंमव्रतेतवुमनंस्तनूषुबिभ्रं
तः ॥ प्रजावंतः सचेमहि ॥ ॐ भूर्भुवःस्वः कुबेरमावाहयामि स्थापयामि ॐ कुबेराय नमः ॥ ७ ॥ ईशाने ईशानमावाह
येत् ॥ ईशानः पंचवक्त्रश्च खट्वांगी चंद्रशेखरः ॥ भक्ताभयप्रदो देवः पूजां गृह्णातु मत्कृताम् ॥ ॐ तमीशांनुंजगंतस्तुस्थुषुस्प
तिंधियंजिन्वमवंसेहूमहेवयम् ॥ पूषानोयथावेदंसामसंद्वृधेरंक्षितापायुरदंब्धःस्वुस्तयें ॥ ॐ भूर्भुवः स्वः ईशानमावाहयामि
स्थापयामि ॐ ईशानाय नमः ॥ ८ ॥ ततो रुद्रं १ भूमिं २ चावाहयेत् ॥ तत्रेशानपूर्वयोर्मध्ये रुद्रमावाहयेत् ॥ पंचवक्त्रं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दशभुजं त्रिनेत्रं स्मितसुंदरम् ॥ कर्पूरगौरं चंद्रार्धशेखरं सुविभूषितम् ॥ नीलग्रीवमनाहारं व्याघ्रचर्मांबरावृतम् ॥ कमंडल्वक्ष सूत्रादिपाशशूलधरं हरम् ॥ डहंडदंडडमरुं खट्वांगाभयपात्रकम् ॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरंहूतौसुजोषाः ॥ यःशᳲसंतेस्तुवतेधायिपज्रऽइंद्रज्येष्ठाऽअस्मांअंवंतुदेवाः ॥ ॐ भूर्भुवः स्वः रुद्रमावाहयामि स्थापयामि ॥ ॐरुद्रायनमः॥९॥ निर्ऋतिपश्चिमयोर्मध्ये भूमिमावाहयेत् ॥ ससुवर्णा मही प्रोक्ता सर्वाभरणभूषिता ॥ चतुर्भुजा सौम्यवपुश्चंद्रांशुसदृशांबरा॥रक्त पात्रं सस्यपात्रं पात्रमौषधिसंयुतम् ॥ पद्माकरां भूमिदेवीमिह चावाहयाम्यहम् ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ॐ भूर्भुवःस्वः भूमिमावाहयामि स्थापयामि ॐ भूम्यै नमः ॥ अत्र ब्रह्मादिपंचचत्वारिंशत्सु रान्प्रत्येकमेकत्र वा कांडानुसमयेन पदार्थानुसमयेन वा षोडशोपचारैः पंचोपचारैर्वा प्रणवादिनमोंतेन स्वस्वनाममंत्रेण पूजयेत् ॥ तत्रायं क्रमः ॥ मनोजूतिरिति प्रतिष्ठा ॥ मध्ये ब्रह्मणे नमः इदं पाद्यम् एषोऽर्घः इदमाचमनीयम् इदं स्नानम् इदं वस्त्रम् ॥ इदमनुलेपनम् इमानि पुष्पाणि एष धूपः एष दीपः एतानि नानाविधानि नैवेद्यानि इदमाचमनीयम् ॥ इदं फलं इदं तांबूलम् इयं दक्षिणा इत्यादिप्रयोगेण ब्रह्माणं संपूज्य अर्यमादीन्सर्वान्संपूज्य च अनेन प्रकारेण स्थापितक्रमेण वा शिख्यादिवास्तुमंडलात्पूर्वादिदिक्षु स्थापितचतुर्णां कलशानां प्रतिष्ठां पूजनं च प्रत्येकनाम्ना कुर्यात् ॥ मध्ये ब्रह्मणे नमः ॥ १ ॥ मध्यात्पूर्वे अर्यम्णे नमः ॥ २ ॥ मध्याद्दक्षिणे सवित्रे नमः ॥ ३ ॥ मध्यात्पश्चिमे विवस्वते नमः ॥ ४ ॥ मध्या दुत्तरे विबुधाधिपतये नमः ॥ ५ ॥ ऐशाने आपवत्साय नमः ॥ ६ ॥ आग्नेये मित्राय नमः ॥ ७ ॥ नैर्ऋत्यां राज

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



यक्ष्मणे नमः ॥ ८ ॥ वायव्ये पृथ्वीधराय नमः ॥ ९ ॥ ईशानात् ऐशाने अद्भ्यो नमः ॥ १० ॥ आग्नेयादाग्नेये सावित्राय नमः ॥ ११ ॥ नैर्ऋत्यान्नैर्ऋत्ये जयाय नमः ॥ १२ ॥ वायव्याद्वायव्ये रुद्राय नमः ॥ १३ ॥ पूर्वस्थापितेशानादिक्रमेण द्वात्रिंशतशिख्यादिदेवताः पूजयेत् ॥ ॐ शिखिने नमः ॥ १४ ॥ पर्जन्याय नमः ॥ १५ ॥ जयंताय नमः ॥ १६ ॥ इंद्राय नमः ॥ १७ ॥ सूर्याय नमः ॥ १८ ॥ सत्याय नमः ॥ १९ ॥ भृशाय नमः ॥ २० ॥ अंतरिक्षाय नमः ॥ २१ ॥ अनिलाय नमः ॥ २२ ॥ पूष्णे नमः ॥ २३ ॥ वितथाय नमः ॥ २४ ॥ गृहक्षताय नमः ॥ २५ ॥ यमाय नमः ॥ २६ ॥ गंधर्वाय नमः ॥ २७ ॥ भृंगराजाय नमः ॥ २८ ॥ मृगाय नमः ॥ २९ ॥ पितृभ्यो नमः ॥ ३० ॥ दौवारिकाय नमः ॥ ३१ ॥ सुग्रीवाय नमः ॥ ३२ ॥ पुष्पदंताय नमः ॥ ३३ ॥ वरुणाय नमः ॥ ३४ ॥ असुराय नमः ॥ ३५ ॥ शेषाय नमः ॥ ३६ ॥ पापाय नमः ॥ ३७ ॥ रोगाय नमः ॥ ३८ ॥ अहये नमः ॥ ३९ ॥ मुख्याय नमः ॥ ४० ॥ भल्लाय नमः ॥ ४१ ॥ सोमाय नमः ॥ ४२ ॥ सर्पाय नमः ॥ ४३ ॥ अदितये नमः ॥ ४४ ॥ दितये नमः ॥ ४५ ॥ बाह्ये ऐशान्ये चरक्यै नमः ॥ ४६ ॥ आग्नेय्यां विदार्य्यै नमः ॥ ४७ ॥ नैर्ऋत्यां पूतनायै नमः ॥ ४८ ॥ वायव्यां पापराक्षस्यै नमः ॥ ४९ ॥ पूर्वे स्कंदाय नमः ॥ ५० ॥ दक्षिणे अर्यम्णे नमः ॥ ५१ ॥ पश्चिमे जृंभकाय नमः ॥ ५२ ॥ उत्तरे पिलिपिच्छाय नमः ॥ ५३ ॥ गणेशाय नमः ॥ ५४ ॥ दुर्गायै नमः ॥५५॥ वाताय नमः ॥५६॥ बीभत्साय नमः ॥५७॥ उग्रसेनाय नमः ॥ ५८ ॥ डामराय नमः ॥ ५९ ॥ महाकालाय नमः ॥ ६० ॥ अश्विभ्यां नमः ॥ ६१ ॥ इंद्राय नमः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

॥ १ ॥ अग्नये नमः ॥ २ ॥ यमाय नमः ॥ ३ ॥ निर्ऋतये नमः ॥ ४ ॥ वरुणाय नमः ॥ ५ ॥ वायवे नमः ॥ ६ ॥ कुबेराय नमः ॥ ७ ॥ ईशानाय नमः ॥ ८ ॥ रुद्राय नमः ॥ ९ ॥ भूम्यै नमः ॥ १० ॥ इत्यादीन् देवान् सकलोपचारैः पृथक् पूजयेत्तंत्रेण वा ॥ इह स्थापितदेवताभ्य इमानि गंधाक्षतपुष्पधूपदीपाच्छादनानि प्रत्येकं पात्रस्थितनैवेद्यमेकत्र वा नैवेद्यमुदकफलतांबूलादीनुपचारान्समर्पयामि नमः यथायथाविभागं पूजनम् ॥ इत्यंगदेवताः संपूज्य तदनंतरं मंडलमध्ये एव मंडूकादिदेवेभ्यो नमः ॥ इति पीठदेवताः संपूज्य आवाह्य अनंतरं वास्तुमंडलमध्ये गृहस्योत्तरे वा यथाविधिना घटं पीठं वा संस्थाप्य प्रधानवास्तुपुरुषं पूजयेत् ॥ तत्रादौ वास्तुमूर्तिं ताम्रपात्रे स्थाप्य अग्न्युत्तारणं कुर्यात् ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य ॐ तत्सदिति अस्यां मूर्तौ अवघातादिदोषपरिहारार्थमग्न्युत्तारणं देवतासांनिध्यार्थं प्राणप्रतिष्ठां च करिष्ये ॥ समुद्रस्यत्वेत्यष्टाभिर्ऋग्भिः प्रथमावृत्तौ दुग्धधारां द्वितीयावृत्तौ जलधारां च प्रतिमायां पात्रस्थितायां दद्यात् ॥ तत्र मंत्राः ॥ ॐ स॒मु॒द्रस्य॑त्वाव॒कया॑ग्ने॒परि॑व्ययामसि ॥ पा॒व॒कोऽअ॒स्मभ्य॑ᳬशि॒वोभ॑व ॥ ॥ १ ॥ हि॒मस्य॑त्वाज॒रायु॑णाग्ने॒परि॑व्ययामसि ॥ पा॒व॒कोऽअ॒स्मभ्य॑ᳬशि॒वोभ॑व ॥ २ ॥ उप॒ज्मन्नुप॑वेत॒सेव॑तरन॒दीष्वा ॥ अग्ने॑ पि॒त्तम॒पाम॑सि॒मंडू॑कि॒ताभि॒राग॑हि॒सेमन्नो॑य॒ज्ञंपा॑व॒कव॑र्णᳬशि॒वंकृ॑धि ॥ ३ ॥ अ॒पामि॒दंन्यय॑नᳬस॒मु॒द्रस्य॑नि॒वेश॑नम् ॥ अ॒न्यां स्ते॑ऽअ॒स्मत्त॑पं॒तु॒हे॒तय॑ः पा॒व॒कोऽअ॒स्मभ्य॑ᳬशि॒वोभ॑व ॥ ४ ॥ अग्ने॑पावकरो॒चिषा॑म॒न्द्रया॑देवजि॒ह्वया॑ ॥ आदे॒वान्व॑क्षि॒यक्षि॑ च ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



॥ ५ ॥ सनः पावकदीदिवोऽग्नेदेवा २ ॥ इहावह ॥ उपयज्ञ ᳪ हविश्चनः ॥ ६ ॥ पावकयायश्चितयंत्याकृपाक्षामन्नुरुचऽउषसो नभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअजरः ॥ ७ ॥ नमस्तेहरसेशोचिषेनमस्तेअस्त्वर्चिषे ॥ अन्याँ स्तेअस्मत्तपंतुहेतयः पावकोअस्मभ्य ᳪ शिवोभव ॥ ८ ॥ इति पात्रस्थवास्तुप्रतिमोपरि अनेनाग्निसूक्तेन समग्रेण दुग्धधारां दद्यात् ॥ द्वितीयावृत्तिसूक्तं पठञ्जलधारां दद्यात् ॥ इति रीत्याऽभ्युत्तारणं कुर्यात् ॥ ततः शुद्धजलेन प्रक्षाल्य प्राण प्रतिष्ठां कुर्यात् ॥ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्यजुःसामानि छंदांसि क्रियामयवपुःप्राणाख्या देवताः ॐ बीजं क्रौं शक्तिः प्राणप्रतिष्ठापने विनियोगः ॥ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि ॥ ऋग्यजुःसामछंदोभ्यो नमः मुखे ॥ प्राणाख्यदेवतायै नमः हृदि ॥ अंबीजाय नमः गुह्ये ॥ क्रौंशक्त्यै नमः पादयोः ॥ ॐ कंखंगंघंङं ॐ पृथ्व्यप्ते जोवाय्वाकाशात्मने आं हृदयाय नमः॥ ॐ चंछंजंझंञं इं शब्दस्पर्शरूपरसगंधात्मने ईं शिरसे स्वाहा ॥ ॐ टंठंडंढंणं उं श्रोत्र त्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट् ॥ ॐ तंथंदंधंनं एं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम् ॥ ॐ पंफंबंभंमं ओं वचनादानविहरणोत्सर्गानंदात्मने औं नेत्रत्रयाय वौषट् ॥ ॐ यं रं लं वं शं षं सं हं ळं क्षं ᳪ अः मनोबुद्ध्यहंकारचिदात्मने अः अस्त्राय फट् ॥ एवमात्मनि मूर्त्तौ च कृत्वा मूर्तिं स्पृष्ट्वा जपेत् ॥ ॐ ह्रींक्रौं यंरंलंवंशंषंसंहं देवस्य प्राणा इहप्राणाः ॥ ॐ आं ह्रीं हं सः देवस्य जीव इह स्थितः ॥ ॐ आं ह्रीं हं सः देवस्य सर्वेंद्रियाणि ॥ ॐ आं ह्रीं हं सः देवस्य वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठंतु स्वाहा ॥ अर्चाहृद्यंगुष्ठं दत्त्वा जपेत् ॥ ॐ अस्यै प्राणाः प्रतिष्ठंतु





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अस्यै प्राणाश्चरंतु च ॥ अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥ प्रणवेन संनिरुध्य सजीवं ध्यात्वा ध्रुवाद्यौरिति त्र्यृचं जप्त्वा कर्णे गायत्रीं देवमंत्रं च जपेत् ॥ ततः कर्ता ॥ स्वागतं तव देवेश मद्भाग्यात्त्वमिहागतः ॥ प्राकृतत्वं सदा त्वं मां बालवत्परिपालय ॥ इति पठित्वा नेत्राभ्यंजनं कृत्वा पंचामृतेन स्नात्वा शुद्धजलेन प्रक्षाल्य पंचोपचारैः पूजयेत् ॥ एवं वास्तुपुरुषप्राणप्रतिष्ठां कृत्वा वास्तुमंडलमध्ये कलशं स्थापयेत् ॥ तस्मिन्कलशे गंगाद्यावाहनम् ॥ गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ १ ॥ ताम्रकलशमध्ये पंचपल्लवपंचरत्नफलमुद्रार्पणसर्वौषधीः सप्तमृदश्च क्षिपेत् ॥ जटी मांसी वचा कुष्ठा शैलेयं रजनीद्वयम् ॥ शुण्ठी चंपकमुस्ता च सर्वौषधिगणः स्मृतः ॥ १ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ गोष्ठाच्चतुष्पथाद्राह्या मृदः सप्तैव शांतिके ॥ १ ॥ तत्र वरुणमावाह्य षोडशोपचारैः पूजयेत् ॥ कलशस्य मुखे विष्णुरित्यादिमंत्रैस्तत्र तीर्थान्यावाहयेत् ॥ एवं सर्वकलशेषु ॥ मध्यकलशोपरि कृकलासाकारस्वरूपां मूर्तिं सुवर्णमयीं पट्टवस्त्राद्यैराच्छाद्य निधाय ततस्तं सकलदेवताधिष्ठितावयवमुत्तानमीशानकोणस्थितशिरसं नैर्ऋत्यकोणस्थितपादं च यथाकारं वास्तुपुरुषं ध्यात्वा षोडशोपचारैः पूजयेत् ॥ तत्रादौ भगवंतं वास्तुपुरुषं प्रार्थयेत् ॥ भगवन्देवदेवेश ब्रह्मादिदेवतात्मक ॥ तव पूजां करिष्यामि प्रसादं कुरु मे प्रभो ॥ इति ॥ ॐभूर्नमो वास्तुपुरुषमावाहयामि ॥ ॐभुवो नमो वास्तुपुरुषमावाहयामि ॥ ॐस्वर्नमो वास्तुपुरुषमावाहयामि ॥ ॐभूर्भुवः स्वर्नमो वास्तुपुरुषमावाहयामि ॥ इत्यावाहनं कृत्वा तदुत्तरे तत्रैव वास्तोष्पते इतिमंत्रेण वृषवास्तुप्रतिमां सुवर्णमयीं वा रजतमयीमावाहयेत् ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वास्तोष्पते इतिमंत्रस्य वसिष्ठऋषिस्त्रिष्टुप्छंदो वास्तुर्देवता वास्तुस्थापने विनियोगः ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे ॥ ॐवास्तोष्पतये नमः वास्तोष्पतिमावाहयामि ॥ ॐह्रींनमो भगवन् वास्तुपुरुष महाबलपराक्रम सर्वदेवताश्रितशरीर ब्रह्मपुत्र सकलब्रह्मांडधारिन् भूम्यर्पितमस्तक पुरपत्तन प्रासादगृहवापीकूपादिसंनिवेशसांनिध्यकर विश्वंभर परमपुरुषस्वरूप शंखचक्रशार्ङ्गधनुःकर वरदाभयहस्त वास्तो नमस्ते नमस्ते ॥ एह्येहि भगवन्वास्तो सर्वदेवैरधिष्ठित ॥ भगवन्कुरु कल्याणं क्षेत्रेऽस्मिन्संनिधो भव ॥ ॐवास्तुपुरुष इह स्वागतो भव ॥ सुप्रसन्नो भव ॥ वरदो भव ॥ इत्यावाह्य वास्तुपुरुषं वृषवास्तुं च पूजयेत् ॥ ॐ सहस्रशीर्षेत्यावाहनम् ॥ ॥ १ ॥ ॐपुरुषएवेत्यासनम् ॥ २ ॥ ॐएतावानस्येतिपाद्यम् ॥ ३ ॥ ॐत्रिपादूर्ध्वमित्यर्घ्यम् ॥ ४ ॥ ॐततोविराडजायत इत्याचमनीयम् ॥ ५ ॥ ॐतस्माद्यज्ञादितिस्नानम् ॥ ६ ॥ ॐततोविराडजायतइतिस्नानांते आचमनम् ॥ ७ ॥ ॐतस्माद्यज्ञात्सर्वमितिवस्त्रं पुनर्वस्त्रांते आचमनम् ॥ ८ ॥ ॐतस्मादश्वाइत्युपवीतं उपवीतांते आचमनम् ॥ ९ ॥ ॐतंयज्ञमित्यनुलेपनम् ॥ १० ॥ ॐयत्पुरुषमिति पुष्पं तुलसीपत्रम् ॥ ११ ॥ ॐब्राह्मणोऽस्य इति धूपम् ॥ १२ ॥ ॐचन्द्रमामनसोजात इतिदीपम् ॥ १३ ॥ ॐनाभ्याऽइति नैवेद्यं नैवेद्यांते आचमनम् ॥ १४ ॥ ॐप्राणाय स्वाहा अपानाय स्वाहा उदानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहा हस्तप्रक्षालनं मुखप्रक्षालनं मध्येमध्ये आचमनीयम् ॥ पूगीफलं सकर्पूरं तांबूलं सुमनोहरम् ॥ पवित्रीकरणं नित्यं तांबूलं प्रतिगृह्यताम् ॥ ॐ यत्पुरुषेण इति





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तांबूलं ऋतुफलं च समर्पयामि ॥ १५ ॥ ॐ यज्ञेनयज्ञमयजंतदेवाः इतिदक्षिणाम् ॥ १६ ॥ ततः आरार्तिकं पुष्पांजलिं च कुर्यात् ॥ एवं कृतेनानेन पूजनेन श्रीमान् वास्तुदेवः प्रीणातु पूजितो वरदो भवतु ॥ एवं पूजयित्वा बलिदानं दद्यात् ॥ ॐए ह्येहि भगवन् वास्तो इमं मयोपनीतं बलिं गृहाण मम गृहमच्छिद्रं कुरु सकलदुष्टग्रहभूतपिशाचवेतालब्रह्मराक्षसेभ्यो रक्षरक्ष स्वाहा ॥ इति मंत्रेण सतांबूलदक्षिणाकं बलिं दत्त्वा प्रार्थयेत् ॥ यज्ञभागं प्रतीक्षस्व पूजां चैव बलिं मम ॥ नमोनमस्ते देवेश मम स्वस्तिकरो भव ॥ इति प्रार्थ्य हस्तौ पादौ प्रक्षाल्यासने उपविश्याचम्य अर्घप्रदानं कुर्यात् ॥ ॐ पूज्योसि त्रिषुलोकेषु यज्ञरक्षार्थहेतवे ॥ त्वद्विना नच सिद्ध्यंति यज्ञदानान्यनेकशः ॥ १ ॥ अयोने भगवन्भर्ग ललाटस्वेदसंभव ॥ गृहाणार्घ्यं मया दत्तं वास्तो स्वामिन्नमोस्तु ते ॥ इत्यर्घं दत्त्वा प्रणामं कुर्यात् ॥ मंत्रहीनं क्रियाहीनं भक्तिश्रद्धासमन्वितम् ॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १ ॥ नमस्ते वास्तुदेवेश सर्वविघ्नहरो भव ॥ शांतिं कुरु सुखं देहि सर्वान् कामान्प्रयच्छ मे ॥ इत्युक्त्वा वास्तुपुरुषं प्रणमेत् ॥ इत्युक्तप्रकारेण वास्तुपुरुषसपर्यां कुर्यात् ॥ अत्र गृहमध्ये कूपश्चेत्तदा कूपप्रतिष्ठा कार्या ॥ तत्र केशवशंभ्वनंतानां स्थापनं पूजनं च जलजंतूनां सप्तमातृकादीनां पूजनं कूपपूजनमाच्छादनमधिवासनं च मत्स्यकच्छपादिमूर्त्तिपूजनं च कर्तव्यम् ॥ ततः पूजनानंतरं कूपमध्ये केशवशंभ्वनंतमूर्तीनां प्रक्षेपणं कुर्यात् ॥ अनंतरं प्रणवादिनमोंतैर्नाममंत्रैः गंधादिभिः संपूज्य बलिदानं कुर्यात् ॥ एवं वास्तुकूपपूजनं कृत्वा ग्रहयज्ञकल्पोक्तप्रकारेण ग्रहस्थापनं ग्रहाधिदेवताप्रत्यधिदेवताक्रतुसंरक्षकदिक्पालदेवतानां यथोक्तपूजनं कुर्यात् ॥ अथ कुशकांडिका ॥ ततः कृतपंचभूसंस्कारपूर्वकस्थापिता

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ग्निं प्रदक्षिणीकृत्य पुष्पचंदनतांबूलपूगीफलद्रव्यवस्त्राण्यादाय अग्नेर्दक्षिणतो वस्त्रासनास्तरणं कल्पयित्वा ब्राह्मणं पादप्रक्षाल नगंधमाल्यादिभिरभिपूज्य हस्ते धौतवस्त्रोत्तरीयकमंडलुभूषणादिकं गृहीत्वा ॐ अद्यकर्त्तव्यनूतनगृहप्रवेशाख्यवास्तुशांतीय हवनकर्मणि कृताकृतावेक्षणरूपं ब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्द्रव्याक्षतपूगीफलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ इति ब्रह्माणं वृणुयात् ॥ वृतोस्मीति प्रतिवचनम् ॥ व्रतेनदीक्षेति रक्षां ॐ युंजंतीति तिलकं च कृत्वा कर्त्ता ब्रह्माणं प्रति यथा विहितं कर्म कुरु इत्युक्ते करवाणीति ब्रह्मा ब्रूयात् ॥ ततोऽस्मिन्कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय भवामीति तेनोक्ते अग्नेर्दक्षिणतः कल्पितासनोपरि उपवेशयेत् ॥ ततः प्रणीतापात्रं वरुणकाष्ठमयं द्वादशांगुलोच्चं चतुरंगुलमध्यखातं पद्माकृतिं पुरतः कृत्वा जलेनापूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततो बर्हिषा परिस्तरणम् ॥ बर्हिषश्चतुर्थभागेनेत्यर्थः ॥ एकाशीतिर्दर्भदलानि बर्हिषः संति तेषां चतुर्भागान्कृत्वा एकेन दर्भेण शून्यहस्तो न भवेत् ॥ प्रथमभागमादाय आग्नेयादीशानांतं १ द्वितीयभागमादाय ब्रह्मणोग्निपर्यंतं २ तृतीयभागमादाय नैर्ऋत्या द्वायव्यांतं ३ चतुर्थभागमादाय अग्नितः प्रणीतापर्यंतं ४ परिस्तरणं कुर्यात् ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतरगर्भं कुशपत्रद्वयं प्रोक्षणीपात्रम् आज्यस्थाली चरुस्थाली संमार्जनकुशाः पंच उपयम नकुशाः सप्त समिधस्तिस्रः प्रादेशमात्राः स्रुवः खादिरः आज्यं षट्पंचाशदुत्तरशतद्वयमुष्टयवच्छिन्नं तंडुलपूर्णपात्रं दक्षिणा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वंरो वा ॥ पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणैतान्यासादनीयानि ॥ अथ त्रिभिः पवित्रच्छेदनकुशैर्द्वे पवित्रे छित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय प्रोक्षणीपात्रं वामहस्ते कृत्वा दक्षिणहस्तानामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ ततः प्रोक्षणीपात्रं प्रणीतोदकेनापूर्य भूमौ पतति तदा प्रायश्चित्तं गोदानम् ॥ ततः प्रोक्षणीजलेन यथासादितवस्तुसेचनम् ॥ ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ चरुपात्रे चरुप्रक्षेपः ॥ आज्याधिश्रयणम् ॥ ततो ज्वलत्तृणमादाय आज्यस्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षेपः ॥ ततः स्रुवप्रतपनं कृत्वा संमार्जनकुशैः स्रुवसंमार्जनं कृत्वा मूलेन मूलं मध्येन मध्यं अग्रेणाग्रं पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात् ॥ तत आज्योत्तारणमवेक्षणमपद्रव्यनिरसनम् ॥ ततः उपयमनकुशानादाय वामहस्ते कृत्वा अग्निपर्युक्षणं कृत्वा उत्तिष्ठन्मनसा प्रजापतिं ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् ॥ उपविश्य पवित्रप्रोक्षण्युदकेनाग्निं पर्युक्षणीकृत्वा पवित्रे प्रणीतापात्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतिं जुहोति ॥ तत्राघारादारभ्य द्वादशाहुतीषु अनंतरं स्रुवावस्थितशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ इति कुशकण्डिकाविधिः ॥ अथ होमः ॥ चतुर्भागं तिलं कुर्यात्त्रिभागं त्वाज्यमेव च ॥ श्वेता यवा द्विभागाः स्युस्तदर्द्धं तंडुलाः स्मृताः ॥ तदर्द्धं शर्करा ज्ञेया मुखवासं यथेच्छया ॥ १ ॥ आयुःक्षयो यवाधिक्ये यवसाम्ये धनक्षयः ॥ सर्वकामसमृद्ध्यर्थं तिलाधिक्य

१ वरोत्र गौः ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





सदैव हि ॥ २ ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ॐ इंद्राय स्वाहा इदमिंद्राय० ॥ ॐ अग्नये स्वाहा इद मग्नये० ॥ ॐ सोमाय स्वाहा इदं सोमाय० ॥ ॐ भूः स्वाहा इदमग्नये ॥ ॐभुवःस्वाहा इदं वायवे० ॥ ॐ स्वःस्वाहा इदं सूर्याय० ॥ एता महाव्याहृतयः ॥ यथा बाणप्रहाराणां कवचं वारणं भवेत् ॥ तद्वद्दैवोपघातानां शांतिर्भवति वारणम् ॥ ॐ शांतिरस्तु ॥ पुष्टिरस्तु ॥ वृद्धिरस्तु ॥ यत्पापं रोगस्तत्प्रतिहतमस्तु द्विपदे चतुष्पदे सुशांतिर्भवतु ॥ ॐ आयुंष्मानग्नेहविषांव्वृधानोघतप्प्रंतीकोघृतयोनिंरेधि ॥ घृतम्पीत्वामधुचारुगव्यंम्पितेवं पुत्रमभिरंक्षताद्दिमान्त्स्वाहां ॥ १७ ॥ इति प्रायश्चित्तहोमः ॥ अथ पंचवारुणीहोमः ॥ ॐ त्वन्नोंऽअग्नेवरुंणस्य विद्वान्देवस्यहेडोऽअवंयासिसीष्ठाः ॥ यजिंष्ठोवह्नितमःशोशुंचानोविश्वाद्वेषांᳬसिप्रमुंमुग्ध्यस्मत्स्वाहां ॥ इदमग्निवरुणाभ्यां० ॥ १ ॥ ॐ सत्वन्नोंऽअग्नेवमोभंवोतीनेदिंष्ठोऽअस्याउषसोव्युंष्टौ ॥ अवंयक्ष्वनोवरुंणᳬरराणो वीहिमृंडीकᳬसुहवांनऽएधिस्वाहां ॥ इदमग्नीवरुणाभ्याम् ॥ २ ॥ ॐअयाश्चाग्नेस्यनंभिशस्तिपाश्चंसत्यमिंत्वमयाऽअसि ॥ अयानोंयज्ञंवहास्ययानोंधेहिभेषजᳬस्वाहां ॥ इदमग्नये ॥ ३ ॥ ॐ येतेंशतंवरुणयेसंहस्रंयज्ञियाःपाशांवितंतांमहांतः ॥ तेभिंर्नोऽअद्यसंवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहां ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्य० ॥ ४ ॥ ॐ उदुंत्तमंवंरुणपाशंमस्मदवांधमंविमंध्यमᳬश्रंथाय ॥ अथांवयमांदित्यव्व्रतेतवानांगसो अदिंतयेस्यामस्वाहां ॥ इदं वरुणाया



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दित्यायादितये०॥९॥ अत्रोदकस्पर्शः ॥ इति पंचवारुणीहोमः ॥ एवं स्थंडिले ब्रह्मोपवेशनादि पात्रासादनं कृत्वा—पात्रासादने विशेषः ॥ ग्रहसमिदातिरिक्ता औदुंबरी खादिरी पंचबिल्वफलानि बीजानि वा पायसादि यथासंभवं बलयः ॥ आज्यभागांतं सर्वं निर्वर्त्य पश्चात्स्रुचो मध्ये चतुर्गृहीतमाज्यं गृहीत्वा स्तंभस्थानदेशेषु चतुर्षु आग्नेयकोणादारभ्य होमः ॥ तत्र मंत्रः ॥ ॐ अच्युताय भौमाय स्वाहा ॥ तत्र मंत्रपाठः ॥ ॐ इमामुच्छ्रयामिभुवनस्यनाभिंवसोर्द्धारां प्रतरणींवसूनांइहैव ध्रुवान्तिमितोमिशालांक्षेमेतिष्ठतुधृम्रुच्छ्रमाणा ॥ १ ॥ अश्वावतीगोमतीसूनृतावत्युच्छ्रयस्वमहतेसौभगाय ॥ २ ॥ आत्वाशिशुराक्रंदंदत्त्वागावोवायूयमामाः अत्वाकुमारस्तरुण आवत्सोजगदैःसहआत्वापारिस्रुतःकुंभआदध्नःकलशैरुपक्षेमस्यपत्नीबृहती सुवासारयिन्नोधिर्हिसुभगवीर्यम् ॥ ३ ॥ अश्ववद्गोमदूर्जस्वत्पूर्णवसतेरिवाभिनः पूर्य्यतातंपिरिदमनुश्रेयोवत्सानः ॥ ४ ॥ एवं प्रतिस्तंभं सर्वत्र मंत्रपाठः ॥ पश्चादुतरत उदपात्रं प्रतिष्ठाप्य ब्रह्माणं मंत्रयते ॥ ब्रह्मन्प्रविशामीति ॥ ब्रह्मानुज्ञातः प्रविशन् ऋचं प्रपद्ये शिवं प्रपद्ये ॥ अतः परं विधिवन्नवग्रहाणां होमः समिदाज्यचरोर्होमः तिलहोमः क्रमेण तु ततः शिख्यादिदेवताभ्यो द्रव्योत्सर्गः ॥ ततो यजमानोऽग्नेर्दक्षिणतः उपविश्य सर्वदेवताद्रव्याणि संकीर्त्य ताभ्य एतान्युत्सृजे न मम ॥ इति एकैकदैवत्यत्यागं कुर्यात् ॥ बहुऋत्विक्कर्तृके होमे प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात् एकत्र त्यागः ॥ तद्यथा—कालज्ञानं कृत्वा अद्य कर्तव्यवास्तुशांत्याख्यहवनकर्मणि गणपतिवरुणवसोर्द्धारायोगिनीमातृकासाधिप्रत्यधिदेवतासहितानां सूर्यादिनवग्रहाणां पंचलोकपालानामिन्द्रादिदशदिक्पालानां मंडलस्थब्रह्मादिदेवतानां सचरक्यादिशिख्यादिपंचचत्वारिंश

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



द्वास्तुप्रधानदेवसहितानां प्रीतये अर्कादिसमिदाज्यपायसयवतिलचरुशर्कराबिल्वबीजफलगुग्गुलसुगंधद्रव्यादि तत्तद्देवता मंत्रैरमुकगोत्रोऽमुकशर्मा ब्राह्मणद्वारा होमार्थमहमुत्सृजे न ममेति द्रव्यत्यागं कुर्यात् ॥ अथ नवग्रहाणां समिधः ॥ अर्कः पलाशः खदिरो ह्यपामार्गोथ पिप्पलः ॥ औदुंबरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ प्रादेशमात्राः सरला घृताक्ताः समिधो जुहुयात् ॥ अथार्कसमिध आदाय ॐआकृष्णेनरजंसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवो यातिभुवनानिपश्यन्स्वाहा ॥ इदं सूर्याय ॥ अनेनार्कसमिद्धोमेन श्रीसविता देवता प्रीयतां तेन मम गृहे शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव एवं सर्वत्र ॥ १ ॥ पलाशस० ॐइमंदेवाअसपत्नꣳसुंवद्ध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायें द्रस्येंद्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजासोमोस्माकंब्राह्मणानाꣳराजास्वाहा ॥ इदं चंद्रमसे ॥ २ ॥ अथ खदिरस० ॐअग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम् ॥ अपाꣳरेताꣳसिजिन्वतिस्वाहा ॥ इदं भौमाय ॥ ३ ॥ अपामार्गस० ॐउद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयंच ॥ अस्मिन्सधस्थेअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत स्वाहा ॥ इदं बुधाय ॥ ४ ॥ पिप्पलस० ॐ बृहस्पतेऽअतियदर्य्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजा ततदस्मासुद्रविणंधेहिचित्रंस्वाहा ॥ इदं बृहस्पतये ॥ ५ ॥ उदुंबर स० ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयः सोमं प्रजापतिः ॥ ऋतेनंसत्यमिंद्रियंविपानꣳशुक्रमंधसइंद्रस्येंद्रियमिदंपयोमृतंमधु स्वाहा ॥ इदं शुक्राय ॥ ६ ॥ शमीस०



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ॐ शन्नोदेवीरभीष्टयऽआपोभवंतुपीतयें ॥ शंय्योरभिस्रवंतुनःस्वाहा ॥ इदं शनैश्चराय० ॥ दूर्वा० ॐ कयानश्चित्रआभुवदूती
सदावृधःसखा ॥ कयाशचिष्ठयावृतास्वाहा ॥ इदं राहवे० ॥ ८ ॥ अथ कुशा० ॐकेतुंकृण्वन्नकेतवेपेशोमर्य्याअपेशसे ॥ समु
षद्भिरजायथाः स्वाहा ॥ इदं केतवे० ॥ ९ ॥ इति नवग्रहाणां होमः ॥ अथ नवग्रहाधिदेवतानां होमः ॥ ॐ त्र्यंबकंयजामहे
सुगंधिंपुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ इदं त्र्यंबकाय० ॥ १ ॥ ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहो
रात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णंनिषाणामुम्मइषाणसर्वलोकंमइषाण स्वाहा ॥ इदमुमायै ॥ २ ॥ ॐ यदक्रंदः
प्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतऽअर्वन्स्वाहा ॥ इदं स्कंदाय० ॥
॥ ३ ॥ ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा स्वाहा ॥ इदं विष्णवे० ॥
॥ ४ ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा ॥
इदं ब्रह्मणे० ॥ ५ ॥ ॐ त्रातारमिंद्रमवितारमिंद्रᳬहवेहवेसुहवᳬशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रᳬस्वस्तिनोमघवाधात्विंद्रः
स्वाहा ॥ इदमिंद्राय ॥ ६ ॥ ॐअसियमोऽअस्यादित्योअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तआहुस्तेत्रीणि
दिविबंधनानिस्वाहा ॥ इदं यमाय ॥७॥ अत्रोदकस्पर्शः॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याउन्नयामि ॥ समापोऽअद्भिरग्मतसमो
षधीभिरोषधीः स्वाहा ॥ इदं कालाय ॥ ८ ॥ अत्राप्युदकस्पर्शः ॥ ॐइधानास्त्वाशतᳬहिमाद्युमंतᳬसमिधीमहि ॥ वयस्वंतो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वयस्कृतꣳसहस्रंतःसहस्कृतम् ॥ अग्नेसपत्नदंभनमदब्धासोअदाभ्यम् ॥ चित्रावसोस्वस्तितपारमशीयस्वाहा ॥ इदं चित्रगुप्ताय० ॥ ९ ॥ इति नवग्रहाधिदेवतानां होमः ॥ अथ नवग्रहप्रत्यधिदेवतानां होमः ॥ ॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँआसादयादिहस्वाहा ॥ इदमग्नये ॥ १ ॥ ॐअप्स्वंतरमृतमप्सुभेषजमपामुतप्रशस्तिष्वश्वाभवतवाजिनः ॥ देवीरापोयोवऊर्म्मिःप्रतूर्तिःककुन्मान्वाजसास्तेनायंवाजꣳसेस्वाहा ॥ इदमद्भ्यः ॥ २ ॥ ॐस्योनापृथिवीनो .वानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाःस्वाहा ॥ इदं पृथिव्यै ॥३॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा॥इदं विष्णवे ॥ ॥ ४ ॥ ॐसजोषाइंद्रसगणोमरुद्भिःसोमं पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूꣳरपमृधोनुदस्वाहाथाभयंकृणुहिविश्वतोनःस्वाहा ॥ इदमिंद्राय ॥५॥ ॐअदित्यैरास्नासीन्द्राण्याउष्णीषः ॥ पूषासिघर्मायदीष्वःस्वाहा॥ इदमिंद्राण्यै ॥ ६ ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ इदं प्रजापतये ॥ ७ ॥ ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमःस्वाहा ॥ इदं सर्पेभ्यः ॥ ८ ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा ॥ इदं ब्रह्मणे ॥ ९ ॥ इति नवग्रहप्रत्यधिदेवतानां होमः ॥ अथ पंचलोकपालानां होमः ॥ ॐगणानांत्वागणपतिꣳहवामहेप्रियाणांत्वाप्रियपतिꣳहवामहे ॥ निधीनांत्वानिधीपतिꣳहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधंस्वाहा ॥ इदं गणपतये ॥ १ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ॐ अंबेऽअंबिकेंबालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकांकांपीलवासिनींस्वाहा ॥ इदं दुर्गायै ॥ २ ॥ ॐ वातो वामनोवागंधर्वाःसप्तविंᳪशतिः ॥ तेअग्रेश्वमयुंजुंस्तेअस्मिन्नवमादधुःस्वाहा ॥ इदं वायवे ॥ ३ ॥ ॐ ऊर्ध्वाऽअस्यसमिधो भवंत्यूर्द्ध्वाशुक्राशोचीᳪष्यग्नेः ॥ द्युमत्तमासुप्रतीकस्यसूनोःस्वाहा ॥ इदमाकाशाय ॥ ४ ॥ ॐ अश्विनोर्भैषज्येनतेजसेब्रह्म वर्चसायाभिषिंचामि ॥ सरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिंचामींद्रस्येंद्रियेणबलायश्रियैयशसेभिषिंचामिस्वाहा ॥ इदमश्विभ्याम् ॥ ५ ॥ इति पंचलोकपालानां होमः ॥ अथ दशदिक्पालानां होमः ॥ ॐ त्रातारमिंद्रमवितार मिंद्रᳪहवेहवेसुहवᳪशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रᳪस्वस्तिनोमघवाधात्विंद्रःस्वाहा ॥ इदमिंद्राय नमः ॥ १ ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवांआसादयादिहस्वाहा ॥ इदमग्नये ॥ २ ॥ ॐ असियमोअस्यादित्यो अर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तआहुस्तेत्रीणिदिविबंधनानिस्वाहा ॥ इदं यमाय ॥ ३ ॥ ॐ एषते निर्ऋतेभागस्तंजुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यःपुरःसद्भ्यः स्वाहायमनेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्यो वामरुन्नेत्रेभ्योवादेवेभ्यउत्तरासद्भ्यःस्वाहासोमनेत्रेभ्यो देवेभ्यउपरिसद्भ्योदुवस्वद्भ्यः स्वाहा ॥ इदं निर्ऋतये ॥ ४ ॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचकेस्वाहा ॥ इदं वरुणाय० ॥ ५ ॥ ॐ वायु रंग्रेगायज्ञप्रीःसाकंगन्मनसायज्ञम् ॥ शिवोनियुद्भिःशिवाभिःस्वाहा ॥ इदं वायवे० ॥ ६ ॥ ॐ कुविदंगयवमंतोयवंचिद्यथा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



दांत्यंनुपूर्वंवियूयं ॥ इहेहैषांकृणुहिभोजंनानियेबर्हिषोनमंउक्तिंयजंतिस्वाहा ॥ इदं कुबेराय० ॥ ७ ॥ ॐ ईशावास्यमिदꣳ सर्वंयत्किंचजगंत्यांजगंत् ॥ तेनंत्यक्तेनंभुंजीथामागृंधःकस्यंस्विद्धनंस्वाहा ॥ इदमीशानाय० ॥ ८ ॥ अत्रोदकस्पर्शः ॥ ॐ नमोंस्तुसर्पेभ्योयेकेचंपृथिवीमनु ॥ येऽअंतरिंक्षेयेदिवितेभ्यंःसर्पेभ्योनमःस्वाहा ॥ इदमनंताय० ॥ ९ ॥ ॐ ब्रह्मंजज्ञानं प्रथमंपुरस्ताद्विसीमतःसुरुचोंवेनआंवः ॥ सबुध्न्याउपमाऽअंस्यविष्ठाःसतश्चयोनिमसंतश्चविवःस्वाहा ॥ इदं ब्रह्मणे० ॥ १० ॥ इति दशदिक्पालहोमः ॥ अथ मातृकाहोमः ॥ आयंगौःपृश्निरक्रमीदसंदन्मातरं पुरः ॥ पितरंचप्रयन्स्वः ॥ ॐ गौर्य्यै स्वाहा ॥ इदं गौर्य्यै ॥ १ ॥ ॐ हिरंण्यरूपाउषसोंविरोकऽउभाविंद्राऽउदिंथःसूर्य्यंश्च ॥ आरोंहणंतंवरुणमित्रगर्तंततंश्चक्ष थामदिंतिंदितिंचमित्रोसिवरुंणोसिस्वाहा ॥ इदं पद्मायै० ॥ २ ॥ ॐ कुदाचनस्तरीरसिनेंद्रंसश्चसिदाशुषे ॥ उपोपेन्नुमंघवन्भूयऽइन्नुतेदानंदेवस्यंपृच्यते ॥ शच्यै स्वाहा इदं शच्यै० ॥ ३ ॥ ॐमेधांमेवरुंणोददातुमेधामग्निःप्रजापतिः ॥ मेधामिंद्रश्चवायुश्चमेधांधातादंदातुमेस्वाहा ॥ मेधायै स्वाहा इदं मेधायै०॥४॥ ॐतत्संवितुर्व्वरेण्यंभर्गोंदेवस्यंधीमहि ॥ धियोयोनंःप्रचोदयांत् ॥ सावित्र्यै स्वाहा इदं सावित्र्यै० ॥ ५ ॥ ॐविज्यंधनुंः कपर्दिनोविशंल्ल्योबाणवाँउत ॥ अनेंशन्नस्ययाऽइषंवऽआभुरंस्य निषंगधिः ॥ विजयायै स्वाहा इदं विजयायै० ॥ ६ ॥ ॐ यातेंरुद्रशिवातनूरघोरापांपकाशिनी ॥ तयांनस्तन्वाशंतंमयागिरिंशंताभिचांकशीहि ॥ जयायै स्वाहा इदं जयायै० ॥ ७ ॥ ॐ देवानांभद्रासुंमतिऋजूयतांदेवानांꣳरातिरभिनोनिवंर्ततताम् ॥





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

देवानां॑ᳪसुख्यमुपंसेदिमाव्वयंदेवानऽआयुःप्रतिंरंतुजीवसे ॥ ॐदेवसेनायै स्वाहा इदं देवसेनायै० ॥ ८ ॥ ॐपितृभ्यं÷स्वधायि
भ्यंःस्वधानमं÷पितामहेभ्यं÷स्वधायिभ्यं÷स्वधानमं॑प्रपितामहेभ्यं॑ स्वधायिभ्यं÷स्वधानमं÷ ॥ अक्षन्पितरोमीमदन्तपितरो
तीतृपंतपितरं॑ पितंर॑शुन्धद्ध्वम् ॥ स्वधायै स्वाहा इदं स्वधायै० ॥ ९ ॥ ॐ स्वाहायज्ञंमिमिक्षतःस्वाहोरोरंतरिक्षात्स्वाहा
द्यावापृथिवीभ्याᳪस्वाहाव्वातादारभेस्वाहा ॥ स्वाहायै स्वाहा इदं स्वाहायै० ॥ १० ॥ ॐ आपोऽअस्मान्मातरंःशुंधयंतुघृते
नंनोघृतप्वः पुनंतु ॥ विश्वᳪहिरिप्रंप्रवहंतिदेवीरुदिदाभ्युःशुचिरापूतऽएमि ॥ दीक्षातपसोस्तनूरंसितांत्वांशिवाᳪशग्मांपरिंदधे
भद्रंव्वर्णंपुष्यंन् ॥ मातृभ्यः स्वाहा इदं मातृभ्यः ॥ ११ ॥ ॐ भवंतन्नःसमंनसौसचेतसावरेप्पसौ ॥ मायज्ञᳪहिंᳪसिष्टंमाय
ज्ञपंतिंजातवेदसौशिवोभंवतमद्यनंः ॥ ॐ लोकमातृभ्यः स्वाहा ॥ इदं लोकमातृभ्यः ॥ १२ ॥ ॐयत्प्रज्ञानंमुतचेतोधृतिंश्चय
ज्योतिंरंतरमृतंप्रजासु ॥ यस्मान्नऽऋतेकिंचुनकर्मंक्रियतेतन्मेमनंःशिवसंकल्पमस्तु ॥ धृत्यै स्वाहा इदं धृत्यै ॥ १३ ॥
ॐ तत्त्वांयामिब्रह्मंणावंदंमानस्तदाशांस्तेयजंमानोहविर्भिः ॥ अहेंडमानोव्वरुणेहबोध्युरुंशᳪसमानऽआयुःप्रमोंषीः ॥ पुष्ट्यै
स्वाहा इदं पुष्ट्यै ॥ १४ ॥ ॐ बृहंस्पतेपरिंदीयारथेंनरक्षोहामित्राँ२ऽअपबाधंमानः ॥ प्रभुंजंत्सेनांः प्रमृणोयुधाजयंन्नस्माकं
मेध्यवितारथांनाम् ॥ तुष्ट्यै स्वाहा इदं तुष्ट्यै ॥ १५ ॥ ॐ प्राणायस्वाहांपानायस्वाहांव्यानायस्वाहां ॥ अम्बेऽअंबिकें
ऽम्बालिकेनमांनयतिकश्चन ॥ ससंस्त्यश्वकःसुभंद्रिकाङ्काम्पीलवासिनीम् ॥ ॐ आत्मनःकुलदेवतायै स्वाहा इदमात्मनः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



कुलदेवतायै ॥ १६ ॥ अथ योगिनीनां होमः चतुर्थ्यंतस्वाहांतनाममंत्रेण जुहुयात् ॥ ॐ गजाननायै स्वाहा इदं गजाननायै० ॥१॥ सिंहमुख्यै स्वाहा ॥ २ ॥ गृध्रस्यायै स्वाहा ॥ ३ ॥ कालतुंडिकायै स्वाहा ॥४॥ उष्ट्रग्रीवायै स्वाहा ॥ ५ ॥ हयग्रीवायै स्वाहा ॥ ६ ॥ वाराह्यै स्वाहा ॥ ७ ॥ शरभाननायै स्वाहा ॥ ८ ॥ उलूक्यै स्वाहा ॥ ९ ॥ शिवायै स्वाहा ॥ ॥ १० ॥ मयूर्यै स्वाहा ॥ ११ ॥ विकटाननायै स्वाहा ॥ १२ ॥ अष्टवक्रायै स्वाहा ॥ १३ ॥ कोटराक्ष्यै स्वाहा ॥ ॥ १४ ॥ कुब्जायै स्वाहा ॥ १५ ॥ विकटलोचनायै स्वाहा ॥ १६ ॥ शुष्कोदरायै स्वाहा ॥ १७ ॥ ललज्जिह्वायै स्वाहा ॥ ॥ १८ ॥ श्वदंष्ट्रायै स्वाहा ॥ १९ ॥ वानराननायै स्वाहा ॥ २० ॥ ऋक्षाक्ष्यै स्वाहा ॥ २१ ॥ केकराक्ष्यै स्वाहा ॥ २२ ॥ बृहत्तुंडायै स्वाहा ॥ २३ ॥ सुराप्रियै स्वाहा ॥ २४ ॥ कपालहस्तायै स्वाहा ॥ २५ ॥ रक्ताक्ष्यै स्वाहा ॥ २६ ॥ शुक्यै स्वाहा ॥ २७ ॥ स्थेन्यै स्वाहा ॥ २८ ॥ कपोतिकायै स्वाहा ॥ २९ ॥ पाशहस्तायै स्वाहा ॥ ३० ॥ दंडहस्तायै स्वाहा ॥ ॥ ३१ ॥ प्रचंडायै स्वाहा ॥ ३२ ॥ चंडविक्रमायै स्वाहा ॥ ३३ ॥ शिशुघ्न्यै स्वाहा ॥ ३४ ॥ पापहंत्र्यै स्वाहा ॥ ३५ ॥ काल्यै स्वाहा ॥ ३६ ॥ रुधिरपायिन्यै स्वाहा ॥ ३७ ॥ वसाधयायै स्वाहा ॥ ३८ ॥ गर्भभक्षायै स्वाहा ॥ ३९ ॥ शवहस्तायै ॥ ४० ॥ अंत्रमालिन्यै स्वाहा ॥ ४१ ॥ स्थलकेश्यै स्वाहा ॥ ४२ ॥ बृहत्कुक्ष्यै स्वाहा ॥ ४३ ॥ सर्पास्यायै स्वाहा ॥ ४४ ॥ प्रेतवाहनायै स्वाहा ॥ ४५ ॥ दंदशूकरायै स्वाहा ॥ ४६ ॥ क्रौंच्यै स्वाहा ॥ ४७ ॥ मृगशीर्षायै स्वाहा ॥ ४८ ॥ वृकाननायै स्वाहा ॥ ४९ ॥ व्यात्तास्यायै स्वाहा ॥ ५० ॥ धूमनिश्वासायै स्वाहा ॥ ५१ ॥ व्योमचरणायै




CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्वाहा ॥ ५२ ॥ ऊर्द्धदृष्ट्यै स्वाहा ॥ ५३ ॥ तापिन्यै स्वाहा ॥ ५४ ॥ शोषिणीदृष्ट्यै स्वाहा ॥ ५५ ॥ कोटरायै स्वाहा ॥ ५६ ॥ स्थूलनासिकायै स्वाहा ॥ ५७ ॥ विद्युत्प्रभायै स्वाहा ॥ ५८ ॥ बलाकास्यायै स्वाहा ॥ ५९ ॥ मार्जारास्यायै स्वाहा ॥ ६० ॥ कटपूतनायै स्वाहा ॥ ६१ ॥ अट्टाट्टहासायै स्वाहा ॥ ६२ ॥ कामाक्ष्यै स्वाहा ॥ ६३ ॥ मृगलोचनायै स्वाहा ॥ ६४ ॥ इति योगिनीनां होमः ॥ अथ सोद्धाराणां होमः ॥ ब्राह्म्यै स्वाहा ॥ १ ॥ माहेश्वर्य्यै स्वाहा ॥ २ ॥ कौमार्य्यै स्वाहा ॥ ३ ॥ वैष्णव्यै स्वाहा ॥ ४ ॥ वाराह्यै स्वाहा ॥ ५ ॥ इंद्राण्यै स्वाहा ॥ ६ ॥ चामुंडायै स्वाहा ॥ ७ ॥ अथ घृतमातृकाणां होमः ॥ कीर्त्यै स्वाहा ॥ १ ॥ लक्ष्म्यै स्वाहा ॥ २ ॥ धृत्यै स्वाहा ॥ ३ ॥ मेधायै स्वाहा ॥ ४ ॥ सिद्ध्यै स्वाहा ॥ ५ ॥ प्रज्ञायै स्वाहा ॥ ६ ॥ सरस्वत्यै स्वाहा ॥ ७ ॥ अथ द्विपंचाशद्भैरवाणां होमः ॥ ॐ अजराय स्वाहा ॥ १ ॥ ॐ इंद्रचोराय स्वाहा ॥ २ ॥ ॐ व्यापकाय स्वाहा ॥ ३ ॥ ॐइंद्रमूर्तये स्वाहा ॥ ४ ॥ ॐमुक्षणाय स्वाहा ॥ ५ ॥ ॐकूष्मांडाय स्वाहा ॥ ६ ॥ ॐवरुणाय स्वाहा ॥ ७ ॥ ॐवामुकाय स्वाहा ॥ ८ ॥ ॐविमुक्ताय स्वाहा ॥ ९ ॥ ॐ सप्तकाय स्वाहा ॥ १० ॥ ॐलीलालोपाय स्वाहा ॥ ११ ॥ ॐएकदंष्ट्राय स्वाहा ॥ १२ ॥ ॐऐरावताय स्वाहा ॥ १३ ॥ ॐओषधीघ्नाय स्वाहा ॥ १४ ॥ ॐबंधनाय स्वाहा ॥ १५ ॥ ॐदिव्याकराय स्वाहा ॥ १६ ॥ ॐकंबलाय स्वाहा ॥ १७ ॥ ॐक्षोभणाय स्वाहा ॥ १८ ॥ ॐगवयवाय स्वाहा ॥ १९ ॥ ॐकालाय स्वाहा ॥ २० ॥ ॐबलधराय स्वाहा ॥ २१ ॥ ॐअणवे स्वाहा ॥ २२ ॥ ॐचंद्रबाणाय स्वाहा ॥ २३ ॥ ॐफटाटोपाय स्वाहा ॥ २४ ॥ ॐजटिला

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



य स्वाहा ॥ २५ ॥ ॐमृत्यवे स्वाहा ॥ २६ ॥ ॐघंटेश्वराय स्वाहा ॥ २७ ॥ ॐविकटाय स्वाहा ॥ २८ ॥ ॐअणिमायै स्वाहा ॥ २९ ॥ ॐगुणबंधाय स्वाहा ॥ ३० ॥ ॐडामराय स्वाहा ॥ ३१ ॥ ॐठंठपणाय स्वाहा ॥ ३२ ॥ ॐस्थविलाय स्वाहा ॥ ३३ ॥ ॐदंतुराय स्वाहा ॥ ३४ ॥ ॐधनदाय स्वाहा ॥ ३५ ॥ ॐनागकर्णाय स्वाहा ॥ ३६ ॥ ॐफोत्कराय स्वाहा ॥ ३७ ॥ ॐम्हादलाय स्वाहा ॥ ३८ ॥ ॐचीरकाय स्वाहा ॥ ३९ ॥ ॐसिंहाय स्वाहा ॥ ४० ॥ ॐमृगाय स्वाहा ॥ ४१ ॥ ॐपक्षाय स्वाहा ॥ ४२ ॥ ॐमेघवाहनाय स्वाहा ॥ ४३ ॥ ॐतीक्ष्णोष्ट्राय स्वाहा ॥ ४४ ॥ ॐअनलाय स्वाहा ॥ ४५ ॥ ॐसुक्रतवे स्वाहा ॥ ४६ ॥ ॐपुंधाय स्वाहा ॥ ४७ ॥ ॐवक्रकायाय स्वाहा ॥ ४८ ॥ ॐवाताय स्वाहा ॥ ४९ ॥ ॐयापनाय स्वाहा ॥ ५० ॥ ॐबटुकाय स्वाहा ॥ ५१ ॥ ॐभैरवाय स्वाहा ॥ ५२ ॥ इतिद्विपंचाशद्भैरवाणां होमः ॥ तत आचार्यऋत्विक्प्रधानहोमं कुर्यात् ॥ एकतंत्रेण त्यागमुक्का तत्र द्रव्याणि तत्संख्या चोच्यते ॥ नवग्रहेभ्यः क्रमेण अर्कादिसमिधः प्रत्येकमष्टोत्तरशतमष्टाविंशतिरष्टौ वा प्रादेशमात्रास्तत्संख्याश्च तिलाज्याहुतीस्तत्तन्मंत्रेणोक्ताः ॥ यदा तेभ्यश्चरुरपि तदाज्याहुतिः ॥ अथ सर्वतोभद्रमंडलदेवतानां होमः ॥ ॐगणपतये स्वाहा इदं गणपतये० ॥ १ ॥ दुर्गायै स्वाहा० ॥ २ ॥ ब्रह्मणे स्वा० ॥ ३ ॥ सोमाय स्वा० ॥ ४ ॥ ईशानाय स्वा० ॥ ५ ॥ इंद्राय स्वा० ॥ ६ ॥ अग्नये स्वा० ॥ ७ ॥ यमाय स्वा० ॥ ८ ॥ निर्ऋतये स्वा० ॥ ९ ॥ वरुणाय स्वा० ॥ १० ॥ वायवे स्वा० ॥ ११ ॥ ध्रुवाय स्वा० ॥ १२ ॥ अध्वराय स्वा० ॥ १३ ॥ सोमाय स्वाहा० ॥ १४ ॥ अद्भ्यः स्वा० ॥ १५ ॥ अनिलाय स्वा० ॥ १६ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अनलाय स्वा० ॥ १७ ॥ प्रत्यूषाय स्वा० ॥ १८ ॥ प्रभाषाय स्वाहा० ॥ १९ ॥ अजाय स्वाहा० ॥ २० ॥ एकपदे स्वाहा० ॥ २१ ॥ अहिर्बुध्न्याय स्वाहा० ॥ २२ ॥ विरूपाय स्वाहा० ॥ २३ ॥ रैवताय स्वाहा० ॥ २४ ॥ हराय स्वाहा० ॥ २५ ॥ बहुरूपाय स्वाहा० ॥ २६ ॥ त्र्यंबकाय स्वाहा० ॥ २७ ॥ सुरेश्वराय स्वाहा० ॥ २८ ॥ सवित्रे स्वाहा० ॥ २९ ॥ जयंताय स्वाहा० ॥ ३० ॥ पिनाकिने स्वाहा० ॥ ३१ ॥ रुद्राय स्वाहा० ॥३२॥ धात्रे स्वाहा०॥३३॥ मित्राय स्वाहा० ॥ ३४ ॥ यमाय स्वाहा० ॥ ३५ ॥ रुद्राय स्वाहा० ॥३६॥ वरुणाय स्वाहा० ॥ ३७ ॥ सूर्याय स्वाहा० ॥ ३८ ॥ भगाय स्वाहा० ॥ ३९॥ विवस्वते स्वाहा० ॥४०॥ पूष्णे स्वाहा०॥४१॥सवित्रे स्वाहा० ॥४२॥ त्वष्ट्रे स्वाहा० ॥ ॥४३॥ विष्णवे स्वाहा०॥४४॥अश्विभ्यां स्वाहा०॥ ४५ ॥ क्रतवे स्वाहा० ॥४६ ॥ दक्षाय स्वाहा०॥४७॥ वसवे स्वाहा०॥४८॥ सत्याय स्वाहा०॥४९॥कालाय स्वाहा०॥५०॥कामाय स्वाहा०॥५१॥अध्वराय स्वाहा० ॥५२॥ रोचनाय स्वाहा० ॥५३॥ पुरूरवसे स्वाहा० ॥ ५४ ॥ आर्द्रवाय स्वाहा० ॥ ५५ ॥ सोमाय स्वाहा० ॥ ५६ ॥ अग्निष्वात्ताय स्वाहा० ॥ ५७ ॥ बर्हिषदे स्वाहा० ॥ ५८ ॥ सुकालाय स्वाहा० ॥ ५९ ॥ एकशृंगाय स्वाहा० ॥ ६० ॥ शूद्राय स्वाहा० ॥ ६१ ॥ सोमाय स्वाहा० ॥ ६२ ॥ कश्यपाय स्वाहा० ॥ ६३ ॥ अत्रये स्वाहा० ॥ ६४ ॥ भरद्वाजाय स्वाहा० ॥ ६५ ॥ विश्वामित्राय स्वाहा० ॥ ६६ ॥ गौतमाय स्वाहा० ॥ ६७ ॥ जमदग्नये स्वाहा० ॥ ६८ ॥ वसिष्ठाय स्वाहा० ॥६९॥ अनंताय स्वाहा० ॥ ॥ ७० ॥ वासुकये स्वाहा० ॥ ७१ ॥ शेषाय स्वाहा० ॥ ७२ ॥ तक्षकाय स्वाहा० ॥ ७३ ॥ कर्कोटकाय स्वाहा० ॥७४॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



पद्माय स्वाहा० ॥ ७५ ॥ महापद्माय स्वाहा ॥ ७६ ॥ शंखपालाय स्वाहा० ॥ ७७ ॥ कंबलाय स्वाहा० ॥ ७८ ॥ पिशाचेभ्यः स्वाहा० ॥ ७९ ॥ गुह्यकेभ्यः स्वाहा० ॥ ८० ॥ सिद्धेभ्यः स्वाहा० ॥ ८१ ॥ भूतेभ्यः स्वाहा० ॥ ८२ ॥ सर्पेभ्यः स्वाहा० ॥ ८३ ॥ विश्वावसवे स्वाहा० ॥ ८४ ॥ गंधर्वाय स्वाहा ॥ ८५ ॥ हाहे स्वाहा० ॥ ८६ ॥ हूहवे स्वाहा० ॥ ८७ ॥ घृताच्यै स्वाहा० ॥ ८८ ॥ मेनकायै स्वाहा० ॥ ८९ ॥ रंभायै स्वाहा० ॥ ९० ॥ उर्वश्यै स्वाहा०॥९१॥ तिलोत्तमायै स्वाहा० ॥ ९२ ॥ सुकेश्यै स्वाहा० ॥ ९३ ॥ मंजुघोषायै स्वाहा० ॥ ९४ ॥ रुद्रेभ्यः स्वाहा० ॥ ९५ ॥ स्कंदाय स्वाहा० ॥ ९६ ॥ नन्दीश्वराय स्वाहा० ॥ ९७ ॥ शूलाय स्वाहा० ॥ ९८ ॥ महादेवाय स्वाहा० ॥ ९९ ॥ रुद्राय स्वाहा० ॥ १०० ॥ श्रियै स्वाहा० ॥ १ ॥ विष्णवे स्वाहा० ॥ २ ॥ मरुद्गणाय स्वाहा० ॥ ३ ॥ पितृभ्यः स्वाहा० ॥ ४ ॥ रागाय स्वाहा० ॥ ५ ॥ मृत्यवे स्वाहा० ॥ ६ ॥ रोगाय स्वाहा० ॥ ७ ॥ वसुभ्यः स्वाहा० ॥ ८ ॥ विघ्नराजाय स्वाहा० ॥ ९ ॥ अद्भ्यः स्वाहा० ॥ १० ॥ समीराय स्वाहा० ॥ ११ ॥ मारुताय स्वाहा० ॥ १२ ॥ मरुते स्वाहा० ॥ १३ ॥ जगत्प्राणाय स्वाहा० ॥ १४ ॥ समीरणाय स्वाहा० ॥ १५ ॥ मातरिश्वने स्वाहा० ॥ १६ ॥ मेदिन्यै स्वाहा० ॥ १७ ॥ गंगायै स्वाहा० ॥ १८ ॥ सरस्वत्यै स्वाहा० ॥ १९ ॥ शरय्वै स्वाहा० ॥ २० ॥ कौशिक्यै स्वाहा० ॥ ॥ २१ ॥ वेत्रवत्यै स्वाहा० ॥ २२ ॥ गोदावर्य्यै स्वाहा ॥ २३ ॥ ताप्यै स्वाहा० ॥ २४ ॥ रेवायै स्वाहा० ॥ २५ ॥ पयोदायै स्वाहा० ॥ २६ ॥ कृष्णायै स्वाहा० ॥ २७ ॥ भीमरथ्यै स्वाहा० ॥ २८ ॥ तुंगभद्रायै स्वाहा० ॥ २९ ॥ क्षुद्र



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नदीभ्यः स्वाहा० ॥ ३० ॥ लवणसमुद्राय स्वाहा० ॥ ३१ ॥ इक्षुसमुद्राय स्वाहा० ॥ ३२ ॥ सुरासमुद्राय स्वहा ॥ ३३ ॥ दधिसमुद्राय स्वाहा० ॥ ३४ ॥ सर्पिःसमुद्राय स्वाहा० ॥ ३५ ॥ क्षीरसमुद्राय स्वाहा० ॥ ३६ ॥ जीवनसमुद्राय स्वाहा० ॥ ३७ ॥ आदित्याय स्वाहा० ॥ ३८ ॥ सोमाय स्वाहा० ॥ ३९ ॥ भौमाय स्वाहा ॥ ४० ॥ बुधाय स्वाहा० ॥ ४१ ॥ बृहस्पतये स्वाहा० ॥ ४२ ॥ शुक्राय स्वाहा० ॥ ४३ ॥ शनैश्चराय स्वाहा० ॥ ४४ ॥ राहवे स्वाहा ॥ ४५ ॥ केतवे स्वाहा० ॥ ४६ ॥ ब्राह्म्यै स्वाहा० ॥ ४७ ॥ माहेश्वर्य्यै स्वाहा० ॥ ४८ ॥ कौमार्य्यै स्वाहा ॥ ४९ ॥ वाराह्यै स्वाहा ॥ ॥ ५० ॥ इंद्राण्यै स्वाहा० ॥ ५१ ॥ चामुंडायै स्वाहा० ॥ ५२ ॥ वज्रायै स्वाहा० ॥ ५३ ॥ शक्तये स्वाहा० ॥ ५४ ॥ दंडाय स्वाहा ॥ ५५ ॥ खड्गाय स्वाहा० ॥ ५६ ॥ पाशाय स्वाहा० ॥ ५७ ॥ अंकुशाय स्वाहा ॥ ५८ ॥ गदायै स्वाहा० ॥ ५९ ॥ त्रिशूलाय स्वाहा० ॥ ६० ॥ पद्माय स्वाहा० ॥ ६१ ॥ चक्राय स्वाहा० ॥ ६२ ॥ श्रीमहाविष्णवे स्वाहा० ॥ ६३ ॥ यथाबाणेतिमूर्द्धाभिषेचनम् ॥ इति मण्डलदेवतानां होमः ॥ अथ प्रधानहोमः ॥ तन्नामभिः शिख्यादिभ्यः प्रत्येकमष्टोत्तरशतमष्टाविंशतिमष्टौ वा आहुतीः ॥ समिधः तिलपायसाज्यैः जुहुयात् ॥ अत्र समिधः औदुम्बरस्य मुख्याः तदलाभेऽश्वत्थादीनामपि ॥ सर्वाः समिधो मधुक्षीरघृतैर्युक्ता होतव्याः ॥ तिलाः कृष्णा एव ॥ पयो गोरेव ॥ केचित्तिलेषु यवानाहुः ॥ अथ चतस्रः आहुतयः समित्तिलपायसाज्यैः ॥ ॐवास्तोष्पते इतिचतुर्णां परमेष्ठी ऋषिर्वास्तोष्पतिर्देवता आद्यस्य गायत्रीच्छंदः इतरेषां त्रिष्टुप्छंदो होमे विनियोगः ॥ ॐ वास्तोष्पते

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



प्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे स्वाहा इदं वास्तोष्पतये० ॥ ॥ १ ॥ ॐ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व स्वाहा इदं वास्तोष्पतये० ॥ २ ॥ ॐ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्मयागातुमत्या ॥ पाहिक्षेमउतयोगेवरन्नोयूयंपातस्वस्तिभिःसदानःस्वाहा इदं वास्तोष्पतये० ॥ ३ ॥ ॐ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः स्वाहा इदं वास्तोष्पतये० ॥ ४ ॥ वास्तोष्पतेध्रुवास्थूणामित्यस्य वास्तोष्पतिर्ऋषिर्बृहतीछन्दो वास्तुर्देवता होमे विनियोगः ॥ ॐवास्तोष्पतेध्रुवास्थूणांछंसत्रंसोम्यानांद्रप्सोभेत्तापुराशश्वतीनामिंद्रोमुनीनांसखाशन्नोभवद्विपदेशंचतुष्पदेस्वाहा इदं वास्तोष्पतये० ॥ ५ ॥ ततः स्थालीपाकेन षडाहुतयः ॥ ॐ अग्निमिंद्रंबृहस्पतिं विश्वान्देवानुपह्वये ॥ सरस्वतींचवाजींचवास्तुमेदत्तवाजिनःस्वाहा इदमग्नये इंद्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाजिने च० ॥ १ ॥ ॐ सर्पदेवजनान्सर्वान्हिमवतं सुदर्शनम् ॥ वसूंश्च रुद्रानादित्यानीशानं जगदैः सह ॥ एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा इदं सर्पदेवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्यः ईशनाय जगदेभ्यश्च० ॥ २ ॥ ॐ पूर्वाह्णमपराह्णं चोभौ मध्यंदिनछं सह ॥ प्रदोषमर्धरात्रं च व्युष्टां देवीं महापथः ॥ एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा इदं पूर्वाह्णाय अपराह्णाय प्रदोषाय अर्द्धरात्राय व्युष्टायै देव्यै महापथाय च न मम ॥ ३ ॥ ॐ कर्तारं च विकर्तारं विश्वकर्माण



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

मोषधीश्च वनस्पतीन् ॥ एतान्सर्वान्प्रपद्येहं वास्तु मे दत्तवाजिनः स्वाहा इदं कर्त्रे विश्वकर्मणे औषधीभ्यो वनस्पतिभ्यश्च न मम ॥ ४ ॥ ॐ धातारं च विधातारं निधीनां च पतिꣳसह ॥ एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा इदं धात्रे विधात्रे निधीनां च पतये नमः ॥ ५ ॥ ॐ स्योनꣳशिवमिदंवास्तुदत्तब्रह्मप्रजापतीन्सर्वांश्चदेवताःस्वाहा इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च० न मम ॥ ६ ॥ अथ पूर्वोक्ताज्याहुतिमंत्रैः चतुर्भिः प्रत्यृचं पंचपंच एकैकं वा घृताक्तं बिल्वं तद्बीजं वा जुहुयात् ॥ ॐ वास्तोष्पते इतिचतुर्भिः ॥ अथ पंचममंत्रमाह ॥ ॐ वास्तोष्पतेध्रुवास्थूणांꣳसत्रꣳसोम्यानांद्रप्सोभेत्तापुराꣳशश्वतीनाम् ॥ इंद्रोमुनीनाꣳसुस्वाशन्नोभवद्विपदेशंचतुष्पदेस्वाहा इति ॥ पश्चादष्टोत्तरशत मौदुंबरसमिद्धोमोविष्णुमंत्रेण ॥ १०८ ॥ ततो ब्रह्मादिचरक्यादिस्थापितदेवतानां तत्तन्नाममंत्रेण स्वाहांतेन वैदिकेन वा यथाशक्त्याज्याहुतीर्जुहुयात् ॥ तत्र हवनप्रकारश्चेत्थम् ॥ ॐ ब्रह्मणे स्वाहा ॥ १ ॥ ॐ अर्यम्णे स्वाहा ॥ २ ॥ ॐ सवित्रे स्वाहा ॥ ३ ॥ ॐ विवस्वते स्वाहा ॥ ४ ॥ ॐ विबुधाधिपतये स्वाहा ॥ ५ ॥ ॐ आपवत्साय स्वाहा ॥ ६ ॥ ॐमित्राय स्वाहा ॥ ७ ॥ ॐ राजयक्ष्मणे स्वाहा ॥ ८ ॥ ॐ पृथ्वीधराय स्वाहा ॥९॥ ॐअद्भ्यः स्वाहा ॥ ॥ १० ॥ ॐसावित्राय स्वाहा ॥ ११ ॥ ॐजयाय स्वाहा ॥ १२ ॥ ॐरुद्राय स्वाहा ॥ १३ ॥ ॐशिखिने स्वाहा ॥ १४ ॥ ॐपर्जन्याय स्वाहा ॥ १५ ॥ ॐजयंताय स्वाहा ॥ १६ ॥ ॐइंद्राय स्वाहा ॥ १७ ॥ ॐसूर्याय स्वाहा ॥ १८ ॥ ॐसत्याय स्वाहा ॥ १९ ॥ ॐवृषभाय स्वाहा ॥ २० ॥ ॐअंतरिक्षाय स्वाहा ॥ २१ ॥ ॐअनिलाय स्वाहा ॥ २२ ॥ ॐपूष्णे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





स्वाहा ॥ २३ ॥ ॐ वितथाय स्वाहा ॥ २४ ॥ ॐगृहक्षताय स्वाहा ॥२५॥ ॐयमाय स्वाहा ॥ २६॥ ॐगंधर्वाय स्वाहा ॥ २७ ॥ ॐभृंगराजाय स्वाहा ॥ २८ ॥ ॐमृगाय स्वाहा ॥ २९ ॥ ॐपितृभ्यः स्वाहा ॥ ३० ॥ ॐदौवारिकाय स्वाहा ॥ ॥ ३१ ॥ ॐसुग्रीवाय स्वाहा ॥ ३२ ॥ ॐपुष्पदंताय स्वाहा ॥ ३३ ॥ ॐवरुणाय स्वाहा ॥ ३४ ॥ ॐअसुराय स्वाहा ॥ ॥ ३५ ॥ ॐशेषाय स्वाहा ॥ ३६ ॥ ॐपापाय स्वाहा ॥ ३७ ॥ ॐरोगाय स्वाहा ॥ ३८ ॥ ॐअहये स्वाहा ॥ ३९ ॥ ॐमुख्याय स्वाहा ॥ ४० ॥ ॐभल्लाटाय स्वाहा ॥ ४१ ॥ ॐसोमाय स्वाहा ॥ ४२ ॥ ॐसर्पाय स्वाहा ॥ ४३ ॥ ॐअदितये स्वाहा ॥ ४४ ॥ ॐदितये स्वाहा ॥ ४५ ॥ अथ चरक्यादिहोमः ॥ ॐचरक्यै स्वाहा ॥ १॥ ॐविदार्य्यै स्वाहा॥२॥ ॐपूतनायै स्वाहा ॥ ३ ॥ ॐपापराक्षस्यै स्वाहा ॥ ४ ॥ ॐस्कंदाय स्वाहा ॥ ५ ॥ ॐअर्यम्णे स्वाहा ॥ ६ ॥ ॐजृंभकाय स्वाहा ॥ ७ ॥ ॐपिलिपिच्छाय स्वाहा ॥ ८ ॥ ॐगणेशाय स्वाहा ॥ ९ ॥ ॐदुर्गायै स्वाहा ॥ १० ॥ ॐवाताय स्वाहा ॥ ११ ॥ ॐबीभत्साय स्वाहा ॥ १२ ॥ ॐउग्रसेनाय स्वाहा ॥ १३ ॥ ॐडामराय स्वाहा ॥ १४ ॥ ॐमहाकालाय स्वाहा ॥ १५ ॥ ॐअश्विभ्यां स्वाहा ॥ १६ ॥ ॐइंद्राय स्वाहा ॥ १ ॥ ॐअग्नये स्वाहा ॥ २ ॥ ॐयमाय स्वाहा ॥ ३ ॥ ॐनिर्ऋतये स्वाहा ॥ ४ ॥ ॐवरुणाय स्वाहा ॥ ५ ॥ ॐवायवे स्वाहा ॥ ६ ॥ ॐकुबेराय स्वाहा ॥ ७ ॥ ॐईशानाय स्वाहा ॥ ८ ॥ ॐरुद्राय स्वाहा ॥ ९ ॥ ॐभूम्यै स्वाहा ॥ १० ॥ इति वास्तुमंडलमध्यवर्तिसर्वदेवतानां होमः ॥ अथाघोरमंत्रेण वास्तुमर्मसंधानाय तिलैर्यवैर्वा मधुघृताक्ताभिराहुतिभिरष्टोत्तरशतं जुहुयात् ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सर्वेभ्युःसर्वशर्वेभ्युो नमस्तेअस्तुरुद्ररूपेभ्युः स्वाहा ॥ १०८ ॥ इति अष्टोत्तरशतवारं जुहुयात् ॥ पश्चात्फलहोमः ॥ गुग्गु
लहोमः ॥ श्रीसूक्तेन लक्ष्मीहोमः ॥ लक्ष्म्यै स्वाहा ॥ इतिमूलमंत्रेण वा लक्ष्मीहोमे अष्टोत्तरशतसंख्या १०८॥ ततः अग्नयेस्वि
ष्टकृते स्वाहा इदमग्नये स्विष्टकृते ॥ इति स्विष्टकृद्धोमः ॥ ततो भूरादिनवाहुतयः ॥ तद्यथा ॐभूः स्वाहा इदमग्नये ॥ ॐभूवः
स्वाहा इदं वायवे ॥ ॐस्वः स्वाहा इदं सूर्याय ॥ एता महाव्याहृतयः ॥ ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्युहेडोऽअवयासि
सीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांᳫंसिप्रमुमुग्ध्युस्मत्स्वाहा इदमग्नीवरुणाभ्यां० ॥ १ ॥ ॐ सत्वन्नोऽअग्नेवुमो
भवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनो वरुणᳫंरराणोवीहिमृडीकᳫंसुहवोनऽएधिस्वाहा इदमग्नीवरुणाभ्यां
॥ २ ॥ ॐ अयाश्चाग्नेः स्यनभि शस्तिपाश्चसत्यमित्त्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजᳫंस्वाहा
इदमग्नये० ॥ ३ ॥ ॐयंतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताम्महांतः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुंचंतुम
रुतःस्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥ ४ ॥ ॐ उदुत्तमंवरुणपाशमस्म
दवाधमंविमध्यमᳫंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदं वरुणायादित्यायादितये० ॥ ५ ॥
इति पंचवारुणीहोमः ॥ ॐ प्रजापतयेस्वाहा इदं प्रजापतये० ॥ ततः संस्रवप्राशनं पवित्राभ्यां मार्जनं पवित्रप्रतिपत्तिः
होमांते ग्रहपूजनं वास्तुमंडलस्थापितदेवतानां च पूजनम् ॥ सुगंधपुष्पमाल्यादिभिः संपूज्य नैवेद्यं पृथक्पृथग्दत्त्वा ॥ ततो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



बलिदानम् ॥ तत्र बलिद्रव्यं विप्रे घृतयुतपायसमेव मांससुरादिस्पर्शस्य निषिद्धत्वात् ॥ क्षत्रियादौ तु वक्ष्यमाणबलिद्रव्यैस्तदभावे पायसेनेति विशेषः ॥ तत्र बिडालकदक्षिणकर्णसमं पायसादिद्रव्यं गृहीत्वा ॐ शिखिने एष पायसबलिर्न मम ॥ इत्येवंप्रयोगेण बलीन्दद्यात् ॥ एवमुत्तरत्रापि ॥ ॐ पर्जन्याय एष बलिर्न मम इत्येवंप्रयोगेणैवमग्रे यथोक्तसंभारैस्तदलाभे पायसैर्वा बलीन्दद्यात् ॥ तत्र प्रतिदेवं बलिद्रव्यभेदा मंत्राश्चोक्ता महाकपिलपंचरात्रे ॥ पायसौदनलाजैश्च युक्तं धूपैः प्रसूनकैः ॥ अक्षतैस्तिलसंयुक्तैर्माषभक्तादिमंडितम् ॥ गृहाणेमं बलिं ब्रह्मन् वास्तुदोषं प्रणाशय ॥ ॐ ब्रह्मणे एष बलिर्न मम ॥ ॥ १ ॥ गंधादिशर्करापूपं पायसोपरिसंस्थितम् ॥ अर्य्यमाख्य गृहाणेमं सर्वदोषान्प्रणाशय ॥ अर्य्यम्णे एष बलिर्न मम ॥ २ ॥ रक्तपुष्पयुतं भक्तं रक्तगंधादिभिर्युतम् ॥ गृहाणेमं बलिं हव्यं सवित्रे ते नमोऽस्तु ते ॥ सवित्रे एष बलिर्न मम ॥ ॥३॥ चंदनाद्यर्चितं नाथ कर्पूरागुरुमंडितम् ॥ विवस्वन्वै गृहाणेमं सर्वदोषान्प्रणाशय ॥ विवस्वते एष बलिर्न मम ॥ ४ ॥ सघृतं मांसभक्तं च वस्त्रगंधाद्यलंकृतम् ॥ बलिं गृहाण सर्वं मे रक्तो विघ्नं प्रणाशय ॥ विबुधाधिपतये एष बलिर्न मम ॥ ॥ ५ ॥ दध्योदनगुडैर्मिश्रं गंधाद्यैश्च सुमंडितम् ॥ गृहाणेमं बलिं वत्स विघ्नमत्र प्रणाशय ॥ आपवत्साय एष बलिर्न मम ॥ ॥६॥ सगुडं पायसं नाथ कुसुमातिसमन्वितम् ॥ गृहाणेमं बलिं हव्यं मित्र शांतिं प्रयच्छ मे ॥ मित्राय एष बलिर्न मम ॥ ७ ॥ सगुडं पायसं नाथ कुसुमादिसमन्वितम् ॥ गृहाणेमं बलिं हव्यं देवदेव नमोस्तु ते ॥ राजयक्ष्मणे एष बलिर्न मम ॥ ८ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

माषौदनं समांसं च गंधाद्दिक्षीरसंयुतम् ॥ गृहाणेमं महीभृत्त्वं सर्वदोषान्प्रणाशय ॥ पृथ्वीधराय एष बलिर्न मम ॥ ९ ॥
क्षीरखण्डसमायुक्तं पुष्पाद्यैश्च सुशोभितम् ॥ गृहाणेमं बलिं ह्यमपः शांतिं प्रयच्छ मे ॥ अद्भ्यः एष बलिर्न मम ॥ १० ॥
पुष्पादिकुशपानीयं कर्पूरागुरुवासितम् ॥ सावित्र वै गृहाणेमं शांतिमत्र प्रयच्छ मे ॥ सावित्राय एष बलिर्न मम ॥ ११ ॥
सुवर्णपिष्टकं चाथ वस्त्रगंधादिभिर्युतम् ॥ घृतान्वितं गृहाणेमं जयदेव नमोस्तुते ॥ जयदेवाय एष बलिर्न मम ॥ १२ ॥
पक्वापक्वमिदं मांसं वस्त्रपुष्पादिसंयुतम् ॥ गृहाणेमं बलिं ह्यं रुद्रदेव नमाम्यहम् ॥ रुद्राय एष बलिर्न मम ॥ १३ ॥
अथ शिख्यादिबहिर्देवताभ्यो बलिदानम् ॥ सघृतं साक्षतान्नं च वस्त्रगंधाद्यलंकृतम् ॥ गृहाणेमं बलिं ह्यं शिखिन्देव नमोस्तु ते ॥ शिखिने एष बलिर्न मम ॥ १४ ॥ शालितंडुलपक्वं च घृतसंयुक्तमेव च ॥ बलिं गृहाण पर्जन्य विघ्नमत्र प्रणाशय ॥ पर्जन्याय एष बलिर्न मम ॥ १५ ॥ ओदनं घृतसंयुक्तं वस्त्रगंधादिमंडितम् ॥ गृहाणेमं बलिं ह्यमिंद्रजाय नमोस्तु ते ॥ जयंताय एष बलिर्न मम ॥ १६ ॥ शीतमन्नं तथा पुष्पं कुंकुमादिसमन्वितम् ॥ गृहाणेमं बलिं ह्यं शक्र देव नमोस्तु ते ॥ इंद्राय एष बलिर्न मम ॥ १७ ॥ पिष्टमांसं गुडं नाथ रक्तगंधादिशोभितम् ॥ गृहाणेमं बलिं सूर्य विघ्नमत्र प्रणाशय ॥ सूर्याय एष बलिर्न मम ॥ १८ ॥ वितानं धूम्रवर्णाभं गंधादिकसुशोभितम् ॥ रक्तयुक्तं गृहाणेमं बलिं सत्य नमोस्तु ते ॥ सत्याय एष बलिर्न मम ॥ १९ ॥ इदं तु मांसभक्तं वै वस्त्रगंधादिपूजितम् ॥ गृहाणेमं भृश बलिं वास्तुदोषं प्रणाशय ॥ भृशाय एष बलिर्न मम ॥ २० ॥ उत्पलं पायसैर्युक्तं वस्त्राकरसमन्वितम् ॥ गृहाणेमं बलिं युक्तमंतारिक्ष

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नमोस्तु ते ॥ अंतरिक्षाय एष बलिर्न मम ॥ २१ ॥ सघृतं मंडकं देव स्वन्नाद्यैरुपशोभितम् ॥ गृहाणेमं बलिं हृद्यं मृगवाह नमोस्तु ते ॥ मृगवाहनाय एष बलिर्न मम ॥ २२ ॥ क्षीरलाजासमायुक्तं रक्तपुष्पादिमंडितम् ॥ गृहाणेमं बलिं हृद्यं पूषन्देव नमोस्तु ते॥ पूष्णे एष बलिर्न मम ॥२३॥ दधिगंधादिभिर्युक्तं पीतपुष्पसमन्वितम् ॥ बलिं वितथ गृह्णेमं विघ्नमत्र प्रणाशय ॥ वितथाय एष बलिर्न मम ॥ २४ ॥ पक्वमांसोदनं वस्त्रनवनीतादिमंडितम् ॥ प्रीतिंकरं गृहाणेमं गृहक्षत नमोस्तु ते ॥ गृहक्षताय एष बलिर्न मम ॥ २५ ॥ भक्तं मधुप्लुतं चैनं रक्तवस्त्रादिमंडितम् ॥ गृहाणेमं बलिं हृद्यं यमदेव नमोस्तु ते ॥ यमाय एष बलिर्न मम ॥ २६ ॥ नानागंधसमायुक्तं रक्तपुष्पादिभिर्युतम् ॥ बलिं गृहाण गंधर्व सर्वदोषान्प्रणाशय ॥ गंधर्वाय एष बलिर्न मम ॥ २७ ॥ इमां तु मैषिकीं जिह्वां माषभक्तोपरिस्थिताम् ॥ गृहाणेमं बलिं भृंगराज शांतिं कुरुष्व मे ॥ भृंगराजाय एष बलिर्न मम ॥ २८ ॥ एनं घृततिलोपेतं गंधपुष्पादिसंयुतम् ॥ गृहाणेमं बलिं हृद्यं मृगदेव नमोस्तु ते ॥ मृगराजाय एष बलिर्न मम ॥ २९ ॥ कृसरं माषसंयुक्तं मधुसर्पिःसमन्वितम् ॥ बलिं गृह्णंतु पितरः सर्वदोषप्रशांतये ॥ पितृभ्य एष बलिर्न मम ॥ ३० ॥ चंदनागुरुकाष्ठं च पैष्टं कृष्णबलिं तथा ॥ गृहाणेमं महाहृद्यं दौवारिक नमोस्तु ते ॥ दौवारिकाय एष बलिर्न मम ॥ ३१ ॥ सुग्रीवायापूपकान्दद्याद्गन्धपुष्पादिभिर्युतान् ॥ सुग्रीव त्वं गृहाणेमं बलिं शांतिं प्रयच्छ मे ॥ सुग्रीवाय एष बलिर्न मम ॥ ३२ ॥ इदं तु पायसं नाथ गंधपुष्पादिमंडितम् ॥ पुष्पदंत गृहाणेमं सर्वदोषान्प्रणाशय ॥ पुष्पदंताय एष बलिर्न मम ॥ ३३ ॥ कुशस्तंबेन संयुक्तं दद्यात्पद्मं च वारुणम् ॥ गृहाणेमं बलिं देव जलराज नमोस्तु ते ॥





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वरुणाय एष बलिर्न मम ॥ ३४ ॥ यवाग्राणि च गोदुग्धं भक्तोपरि सुरान्वितम् ॥ प्रीतो बलिं गृहाणेमं रक्षोराज नमोस्तु ते ॥ असुराय एष बलिर्न मम ॥३५ ॥ ओदनं घृतसंयुक्तं कर्पूरादिसमन्वितम् ॥ गृहाणेमं बलिं शेष सर्वशांतिं प्रयच्छ मे ॥ शेषाय एष बलिर्न मम ॥ ३६ ॥ यवचूर्णेन संयुक्तं रक्तगंधादिमण्डितम् ॥ गृहाणेमं बलिं पाप रक्षोविघ्नं विनाशय ॥ पापाय एष बलिर्न मम ॥ ३७ ॥ मोदकं घृतसंयुक्तं गंधपुष्पादिशोभितम् ॥ गृहाणेमं बलिं रोग सर्वरोगान्प्रणाशय ॥ रोगाय एष बलिर्न मम ॥ ३८ ॥ इदं तु कृसरान्नं च नागकेसरसंयुतम् ॥ पातालेश गृहाणेमं विघ्नमत्र प्रणाशय ॥ अहये एष बलिर्न मम ॥३९॥ नारिकेलोदकं भक्तं पीतवस्त्रादिसंयुतम् ॥ गृहाणेमं बलिं मुख्य वास्तुदोषं प्रणाशय ॥ मुख्याय एष बलि०॥४०॥ पायसं मधुना मिश्रं मुद्गमोदनसंयुतम् ॥ भल्लाटेमं गृहाण त्वं कल्याणं कुरु मे सदा ॥ भल्लाटाय एष बलिर्न मम ॥ ४१ ॥ गोक्षीरेण समायुक्तं मधुसर्पिःसमन्वितम् ॥ गृहाणेमं बलिं सोम सर्वदोषान्प्रणाशय ॥ सोमाय एष बलिर्न मम ॥ ४२ ॥ सघृतं शालिपिष्टं च पायसेन विमिश्रितम् ॥ गृहाणेमं बलिं सर्प नागराज नमोस्तु ते ॥ सर्पाय एष बलिर्न मम ॥४३॥ पोलिकां मधुसंमिश्रां वस्त्रगंधादिसंयुताम् ॥ गृहाणेमं बलिं हृद्यं देवमातर्नमोऽस्तु ते ॥ अदितये एष बलिर्न मम ॥ ४४ ॥ क्षीरखंडसमायुक्तां पोलिकां घृतपाचिताम् ॥ दैत्यमातर्गृहाणेमं सर्वदोषान्प्रणाशय ॥ दितये एष बलिर्न मम ॥ ४५ ॥ मंडलबाह्ये ॥ घृतेनसाधितं मांसं वस्त्रगंधादिसंयुतम् ॥ चरकि त्वं गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ चरक्यै एष बलिर्न मम ॥ ॥ ४६ ॥ रक्तपुष्पं समांसं वै रक्तगंधादिसंयुतम् ॥ विदारिके गृहाणेदं रक्षोविघ्नं विनाशय ॥ विदार्य्यै एष बलिर्न मम ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



॥ ४७ ॥ माषान्नं दधिसंयुक्तं तिलतैलसमन्वितम् ॥ पूतने त्वं गृहाणेदं वास्तुदोषं प्रणाशय ॥ पूतनायै एष बलिर्न मम ॥ ॥ ४८ ॥ सघृतं पोलिकां चैव मत्स्यमांसं सुरासवम् ॥ पापराक्षसि गृहाणेदं वास्तुदोषं प्रणाशय ॥ पापराक्षस्यै एष बलिर्न मम ॥४९॥ मांसोदनं पुष्पयुक्तं माषान्नोपरिसंस्थितम्॥गृहाणेमं बलिं स्कंद वास्तुदोषं प्रणाशय॥ स्कंदाय एष बलिर्न मम ॥ ॥ ५० ॥ समांसं पोलिकायुक्तं कृशरान्नेन पूरितम् ॥ अर्यमंस्त्वं गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ अर्यम्णे एष बलिर्न मम ॥ ॥ ५१ ॥ रक्तमांसौदनं मत्स्यगंधधूपसमन्वितम् ॥ जृंभक त्वं गृहाणेमं रक्षोविघ्नं विनाशय ॥ जृंभकाय एष बलिर्न मम ॥ ॥ ५२ ॥ छागकर्णान्वितं मांसं वस्त्रगंधादिसंयुतम् ॥ पिलिपिच्छ गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ पिलिपिच्छाय एष बलिर्न मम ॥ ५३ ॥ माषान्नं कृशरायुक्तं पिष्टदीपसमन्वितम् ॥ क्षेत्रपाल गृहाणेमं वास्तुदोषं प्रणाशय ॥ क्षेत्रपालाय एष बलिर्न मम ॥५४॥ माषान्नं तैलपक्कं च रक्तपुष्पसमन्वितम् ॥ लोकपाल गृहाणेमं रक्षोविघ्नं विनाशय ॥ लोकपालाय एष बलिर्न मम ॥ ५५ ॥ घृतं मांसोदनं मत्स्यं वस्त्रगंधादिसंयुतम् ॥ उग्रसेन नमस्तुभ्यं वास्तुदोषं प्रणाशय ॥ उग्रसेनाय एष बलिर्न मम ॥ ५६ ॥ दध्योदनसमायुक्तं रक्तपुष्पसमन्वितम् ॥ डामरेमं गृहाण त्वं रक्षोविघ्नं विनाशय ॥ डामराय एष बलिर्न मम ॥५७॥ सिंदूरं करवीरं च तिलतैलसमन्वितम् ॥ गृहाणेमं बलिं हव्यं महाकालाय ते नमः ॥ महाकालाय एष बलिर्न मम ॥ ॥ ५८ ॥ छागकर्णान्वितं मांसं पुष्पगंधादिसंयुतम् ॥ बीभत्स त्वं गृहाणेमं वास्तुदोषं प्रणाशय ॥ बीभत्साय एष बलिर्न मम ॥५९॥ गुडं घृतसमायुक्तं करवीरसमन्वितम् ॥ गणाय हि नमस्तुभ्यं वास्तुदोषं प्रणाशय ॥ गणेशाय एष बलिर्न मम॥६०॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

छागमांसं सुरायुक्तं रक्तवस्त्रसमन्वितम् ॥ दुर्गे देवि नमस्तुभ्यं वास्तुदोषं प्रणाशय ॥ दुर्गायै एष बलिर्न मम ॥ ६१ ॥ इदं तु शाद्वलं मांसं नैवेद्यादिकसंयुतम् ॥ घृतान्वितं गृहाणेदं वास्तुदोषं प्रणाशय ॥ वाताय एष बलिर्न मम ॥ ६२ ॥ सघृतं शाद्वलं मांसं पायसं शर्करान्वितम् ॥ गृहाणेदं त्वमाकाश वास्तुदोषं प्रणाशय ॥ आकाशाय एष बलिर्न मम ॥६३॥ घृतयुक्तं पायसान्नं शर्करादधिसंयुतम् ॥ गृहाणेमं बलिं हृद्यं वास्तुदोषं प्रणाशय ॥ अश्विभ्यामेष बलिर्न मम ॥ ६४ ॥ दध्योदनस मायुक्तं रक्तचंदनमिश्रितम् ॥ दिक्पालेमं बलिं गृह्णन्वास्तुदोषं प्रणाशय ॥ दिक्पालेभ्य एष बलिर्न मम ॥ ६५ ॥ नानाप क्वान्नसंयुक्तं नानागंधसमन्वितम् ॥ बलिं गृहाण देवेश वास्तुदोषं प्रणाशय ॥ वास्तुपुरुषाय एष बलिर्न मम ॥ ६६ ॥ अभावाद्युक्तमार्गस्य कुशपुष्पदध्यक्षतघृतैर्यजेत् ॥ पश्चादेकस्मिन्पात्रे दध्योदनदीपरक्तचंदनरक्तपुष्पाक्षतरौप्यसुवर्णसंयुक्तं बलिदानं कर्तव्यम् ॥ तत्र मंत्राः ॥ स्वर्गपातालमर्त्येषु ये देवा वास्तुसंभवाः ॥ गृह्णंत्विमं बलिं हृद्यं तुष्टा यांतु स्वमंदिरम् ॥ १ ॥ मातरो भूतवेताला ये चान्ये बलिकांक्षिणः ॥ विष्णोः पारिषदा ये च तेपि गृह्णंत्विमं बलिम् ॥ २ ॥ पितृभ्यः क्षेत्रपालेभ्यो ये चान्ये भैरवादयः ॥ ते सर्वे तृप्तिमायांतु वास्तुदोषः प्रणश्यतु ॥ ३ ॥ एतद्बलिदानम् ॥ पश्चात्सर्वेषां तांबूल दक्षिणादि समर्पणम् ॥ कर्पूरेणारार्तिकम् ॥ वास्तुपुरुषाय नारिकेलार्घः ॥ दिक्पालेभ्यो बलिदानानंतरं वा नीराजनं पुष्पांजलिर्नारिकेलार्घश्च विधेयः ॥ अथेंद्रादिदशदिक्पालेभ्यः सदीपबलिदानं कुर्यात् ॥ तद्यथा ॥ पूर्वे इंद्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भो इंद्र दिशं रक्ष बलिं भक्ष अस्य यजमा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नस्य सकुटुंबस्य आयुःकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ १ ॥ आग्नेय्यामग्नये सांगाय सपारिवाराय सायु
धाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भो अग्ने दिशं रक्ष बलिं भक्ष अस्मिन्गृहप्रवेशवास्तुशां
त्याख्यकर्मणि यजमानस्य सकुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ २ ॥ दक्षिणे
यमाय सांगाय सपरिवाराय साधुयाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भो यम दिशं रक्ष
बलिं भक्ष यजमानस्य सकुटुंबस्य आयुःकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ३ ॥ नैर्ऋत्यां निर्ऋतये सांगाय सपरि
वाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो निर्ऋते दिशं रक्ष बलिं भक्ष अस्य यज
मानस्य सकुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ४ ॥ पश्चिमे वरुणाय सांगाय
सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो वरुण दिशं रक्ष बलिं भक्ष अस्य
यजमानस्य सकुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ५ ॥ वायव्यां वायवे सांगाय
सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो वायो दिशं रक्ष बलिं भक्ष अस्य
यजमानस्य सकुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ६ ॥ उत्तरे कुबेराय
सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो कुबेर दिशं रक्ष
बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ७ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ऐशान्यामीशानाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो ईशान दिशं रक्ष बलिं भक्ष अस्य यजमानस्य आयुःकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ८ ॥ ईशान्यपूर्वयोर्मध्ये ब्रह्मणे सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो ब्रह्मन् दिशं रक्ष बलिं भक्ष अस्य यजमानस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ ९ ॥ निर्ऋतिपश्चिमयोर्मध्ये अनंताय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो अनंत दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ १० ॥ इति दशदिक्पालबलिः ॥ अथ नवग्रहबलिः ॥ नवग्रहेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतं सदीपं दधिमाषभक्तबलिं समर्प्पयामि ॥ भो सूर्यादिग्रहाः दिशो रक्षध्वं बलिं भक्षध्वमस्य यजमानस्य सकुटुंबस्य आयुःकर्तारः क्षेमकर्तारः शांतिकर्तारस्तुष्टिकर्तारः पुष्टिकर्तारो वरदा भवत ॥ इति ग्रहादिबलिः॥ अथ क्षेत्रपालबलिः ॥ दधिमाषसिंदूरकज्जलदीपद्रव्यसहितमोदनं पात्रे निधाय क्षेत्रपालाय शाकिनीडाकिनीभूतप्रेतवेतालपिशाचसहिताय इमं बलिं समर्प्पयामि ॥ भो क्षेत्रपाल दिशो रक्ष बलिं भक्ष मम यजमानस्य सकुटुंबस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदो भव ॥ १ ॥ करकलितकपाली कुंडली दंडपाणिस्तरुणतिमिरनीलव्यालयज्ञोपवीती ॥ क्रतुसमयसपर्याविघ्नविच्छेदहेतुर्जयति बटुकनाथः सिद्धिदः साधकानाम् ॥ १ ॥ ततः ॐभूतायत्वानारातयेस्वरभिविष्येखंदृ१ंहंताडुर्व्याः पृथिव्यामुर्वंतरिक्षमन्वेमि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



पृथिव्यास्त्वानाभौसादयाम्यदित्याऽउपस्थेग्नेहव्यꣳरक्ष ॥ अनेन क्षेत्रपतिबलिनेतारं प्रति तंदुलान्प्रक्षिपेत् ॥ ब्रह्मणे पूर्णपात्र दानम् ॥ अद्येत्यादि कृतस्यास्य नूतनगृहप्रवेशनिमित्तकवास्तुशांतिकहवनकर्मणः सांगतासिद्ध्यर्थमिदं पूर्णपात्रं प्रजापति दैवतं ब्रह्मणे दातुमहमुत्सृजे ॥ ततो ब्रह्मग्रंथिविमोकः ॥ ॐसुमित्रयानऽआपऽओषधयः संतु ॥ इति पवित्रं गृहीत्वा प्रणीताज लेन शिरः संमृज्य ॐदुर्मित्रयानस्तस्मैसंतुयोस्मान्द्वेष्टियं च वयं द्विष्मः ॥ इति ऐशान्यां प्रणीतां न्युब्जीं कुर्यात् ॥ अथ पूर्णाहुतिसंकल्पः ॥ अद्येत्यादि अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवारनक्षत्रयोगकरणमुहूर्तवर्तमानायां नूतनगृहप्रवे शाख्ययज्ञकर्मणा वास्तुदेवताप्रीतये ममास्मिन्गृहे मनोभिलषितधर्मार्थकामादियथेप्सितायुरारोग्यैश्वर्यपुत्रपौत्रपशुसखिसुहृ त्संबंधिबंधुसंपदिष्टादिप्राप्तये च ब्राह्मणद्वारा कारिते वास्तुयज्ञकर्मणि गणपतिगौर्य्यादिनवग्रहाद्यधिदेवप्रत्यधिदेवपंच लोकपालदशदिक्पालयोगिनीभैरवैकोनपंचाशन्मरुद्गणवास्तोष्पत्याद्यावाहितेष्टदेवताप्रीतये च स्वैर्मंत्रैःकृताभिर्यवतिलतंडुला ज्याहुतिभिः परिपूर्णतासिद्ध्यये अमुकगोत्रोऽमुकशर्माऽहं पूर्णाहुतिहोमं करिष्ये ॥ यजमानः सपत्नीकः आचार्य्यस्य दक्षिणस्कंधं स्पृशन् तांबूलपूगीफलाक्षतघृतं स्रुवे कृत्वा पूर्णाहुतिं दद्यात् ॥ तत्र मंत्राः ॥ ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जꣳशतक्रतोस्वाहा ॥ १ ॥ ॐमूर्द्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निम् ॥ कवि ꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाःस्वाहा ॥२॥ ॐशुक्रज्योतिश्चचित्रज्योतिश्चसत्यंज्योतिश्चज्योतिष्मांश्च ॥ शुक्र श्चऋतपाश्चात्यꣳहाः स्वाहा ॥ ३ ॥ इति पूर्णाहुतिः ॥ ॐईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ् च ॥ मितश्चसंमितश्च

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सप्रुराः ॥ इति रुद्रकलशत्यागः ॥ अथ बर्हिर्होमः ॥ ॐदेवा गातुविदोगातुंवित्वागातुमितमनंसस्पत ॥ इमंदेवयज्ञꣳस्वाहा वातेधाः ॥ इति बर्हिर्होमः ॥ अथ भस्मवंदनम् ॥ अथ त्र्यायुषकरणम् ॥ ॐत्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्या युषमितिग्रीवायाम् ॥ यद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले॥तन्नोऽस्तुत्र्यायुषमितिहृदि ॥ इतित्र्यायुषकरणम् ॥ततः नीराजनम्॥ साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं तु वा ॥ गृहाण दीपं कार्पूरं त्रैलोक्यतिमिरापहम् ॥ इति नीराजनम् ॥ ततः पुष्पां जलिं गृहीत्वा ॐयज्ञेनं यज्ञमयजंतदेवास्तानिधर्माणिप्रथमांन्यासन् ॥ तेहनाकं महिमानंः सचंतयत्रपूर्वेसाध्याः संतिदेवाः ॥ राजाधिराजायप्रसह्यसाहिनेनमोवयंवैश्रवणायकुर्महे ॥ समेकामान्कामकामायमह्यंकामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणा यमहाराजाय नमः॥ ॐस्वस्तिसाम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्व भौमः सर्वायुषआंतादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यंतायाएकराडितितदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाः सभासदः ॥ १ ॥ सेवंतिकाबकुलचंपकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः ॥ बिल्व प्रवालतुलसीदलमंजरीभिस्त्वांपूजयामि सदनेश्वर वास्तुदेव ॥ १ ॥ सगणपत्यादिवास्तुदेवताभ्यो मंत्रपुष्पांजलिं समर्प यामि ॥ ततः परिक्रमणम् ॥ तत उदुम्बरपत्राणि सक्षीराणि दूर्वागोमयदधिमधुघृतकुशयवान्समभागान्कांस्यपात्रे कृत्वा आसनोपस्थानेषु प्रोक्षणं कुर्यात् ॥ तत्र मंत्राः ॥ अथ पूर्वसंधावभिमृशति ॥ ॐश्रीश्चत्वावश्चपूर्वेसंधौगोपायेताम् ॥ अथ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



दक्षिणे संधावभिमृशति ॥ ॐयज्ञस्यत्वादक्षिणाचदक्षिणेसंधौगोपायेताम् ॥ अथ पश्चिमे संधावभिमृशति ॥ ॐअन्नंचत्वा ब्राह्मणाश्चपश्चिमेसंधौगोपायेताम् ॥ अथोत्तरे संधावभिमृशति ॥ ॐउर्क्चत्वासूनृताचोत्तरेसंधौगोपायेताम् ॥ ४ ॥ इति चतुर्दिक्षु प्रोक्षयेत् ॥ अथ गृहान्निष्क्रम्य पूर्वदिशि उपतिष्ठते ॥ तत्र मंत्राः ॥ ॐकेताचमांसुकेताचपुरस्ताद्गो पायेतामित्यग्निर्वैकेतादित्यःसुकेतातौप्रमपद्येताभ्यांनमोस्तुतौमापुरस्ताद्गोपायेताम् ॥ १ ॥ अथ दक्षिणदिश्युपतिष्ठते ॥ दक्षिणतो गोपायमानं चमारक्षमाणाच दक्षिणतोगोपायतामित्यहर्वैगोपायमानꣳरात्रीरक्षमाणातेप्रपद्येताभ्यां नमोस्तुतेमा दक्षिणतोगोपायेतामिति ॥ २ ॥ अथ पश्चिमदिश्युपतिष्ठते ॥ अथ पश्चाद्दीदिविविश्वमाजागृविश्वपश्चाद्गोपायेतामित्य न्नंवैदीदिविप्राणोजागृविस्तौप्रपद्येताभ्यांनमोस्तुतौमापश्चाद्गोपायेतामिति ॥ ३ ॥ अथोत्तरदिश्युपतिष्ठते ॥ अथोत्तरतोऽ स्वप्नश्चमानवद्राणश्चोत्तरतोगोपायेतामितिचंद्रमावाअस्वप्नोवायुरनवद्राणस्तौप्रपद्येताभ्यांनमोस्तुतौमोत्तरतोगोपायेतामिति ॥ ॥ ४ ॥ अथ शालायां प्रविशेत् ॥ प्रविश्य गृहस्याभ्यंतरे निधिशालायां दक्षिणकोणे गत्वा श्रियं संस्थाप्य पूज येत् ॥ तत्रादौ सुवर्णादिधातुमये एकस्मिन्पात्रे धान्यसर्षपरजतान्वितं दूर्वाक्षतगंधपुष्पादिसंभारं कृत्वा तस्मिन्कलशे पटवस्त्रान्विताम् श्रियं स्थापयित्वा पूजयेत् ॥ तत्र संकल्पः ॥ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे भरतखंडे जंबुद्वीपे रामराज्ये श्रीगंगायमुनयोः पश्चिमतटे नर्मदाया उत्तरे तटे श्रीबौद्धावतारे अस्मिन्वर्तमाने अमुकनामसंवत्सरे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अमुकायने अमुककर्त्तौ अमुकमासे अमुकपक्षे अमुकवासरे अमुकतिथौ अमुकनक्षत्रे अमुकराशिस्थिते चंद्रे अमुकराशि स्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथा राशिस्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभ पुण्यतिथौ अमुकगोत्रोत्पन्नस्य पुत्रपौत्रादिसहितस्य मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थम् ऐश्वर्याभिवृद्ध्यर्थम् अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थं सकलमनईप्सितकामनासिद्ध्यर्थं लोके वा सभायां राजद्वारे सर्वत्र यशोविजयलाभादिप्राप्त्यर्थम् इह जन्मनि जन्मांतरे वा सकलदुरितोपशमनार्थं च नूतनगृहप्रवेशाख्यवास्तुप्रतिष्ठाख्य कर्मणि लक्ष्मीपूजनमहं करिष्ये इति संकल्पः ॥ अत्र लक्ष्मीसूक्तेनांगन्यासं कृत्वा पूजयेत् ॥ आलयं ते हि कथितं कमलं कमलालये ॥ विमले कमले ह्यस्मिन्स्थितिं त्वं कृपया कुरु ॥ १ ॥ लक्ष्म्यै नम आवाहनं स० ॥ कमले पाहि मे देवि स्वर्णसिंहासनं शुभम् ॥ गृहाणेदं मया दत्तं भक्तियुक्तेन चेतसा ॥ ल० आसनं० ॥ गंगादिसलिलाधारं तीर्थमंत्राभिमंत्रितम् ॥ दूरयात्राश्रमहरं पाद्यं मे प्रतिगृह्यताम् ॥ ल० पाद्यं स० ॥ ल० अर्घ्यं स० ॥ आचम्य जगदाधारे सिद्धिलक्ष्मी जगत्प्रिये ॥ चपले देवि ते दत्तं तोयं गृह्ण नमोस्तु ते ॥ ल० आचमनं० ॥ पयो दधि घृतं क्षौद्रं सितया च समर्पितम् ॥ स्नानं पंचामृते नाद्य कुरु देवि दयानिधे ॥ ल० पंचामृतं० ॥ इदं तव महालक्ष्म्याः कर्पूरागरुवासितम् ॥ तीर्थेभ्यः सुसमानीतं स्नानार्थं प्रतिगृह्यताम् ॥ ल०स्नानं स०॥ सूक्ष्मतंतुभवं वस्त्रं निर्मितं विश्वकर्मणा ॥ लोकलज्जाहरं देवि गृहाण सुरसत्तमे ॥ ल०वस्त्रं०॥ कंचुकीं नानासौभाग्यद्रव्यं च स० ॥ मलयाचलसंभूतं घनसारं मनोहरम् ॥ शीतलं बहुलामोदं चंदनं प्रतिगृह्यताम् ॥ ल०

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



चंदनं स० ॥ नीलोत्पलं महामोदं मत्तालिकुलसंकुलम् ॥ आनंदि नंदनोत्पन्नं पद्मं गृह्ण नमोस्तु ते ॥ ल० पुष्पाणि स० ॥ गंधसंभा रसन्नद्धकस्तूरीमोदसंभवम् ॥ सुरासुरनरानंदि धूपं देवि गृहाण मे ॥ ल० धूपं स० ॥ मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसा ॥ निधानं देवि दीपोयं निर्मितस्तव भक्तितः ॥ ल० दीपं स० ॥ देवतालयपातालभूतलाधारधान्यजम् ॥ षोडशाकारसंभारं नैवेद्यं ते नमः सदा ॥ ल० नैवेद्यं स० ॥ स्नानादिकं विधीयेत यतः शुद्धिः प्रजायते ॥ एतदाचमनीयं च महालक्ष्मि विधीयताम् ॥ ल० आचमनं करोद्वर्तनं च स० ॥ पातालतलसंभूतं वदनांभोजभूषणम् ॥ नानागुणसमाकीर्णं तांबूलं प्रतिगृह्यताम् ॥ ल० तांबूलं स० ॥ हिरण्यगर्भेति दक्षिणां स० ॥ आज्यंचेति नीराजनं स० ॥ शारदेंदुकलाकांतिः स्निग्धनेत्रा चतुर्भुजा ॥ पद्म युग्मा चाभयदा करव्यग्रकरांबुजा ॥ ल० पुष्पांजलिं समर्पयामि ॥ विष्णोर्वक्षसि पद्मे च शंखे चक्रे गदांबरे ॥ लक्ष्मि देवि यथासि त्वं मयि नित्यं तथा तव ॥ १ ॥ पंकजं देवि संत्यज्य मम वेश्मनि संविश॥ यथा सपुत्रभृत्योहं सुखी स्यां त्वत्प्र सादतः ॥ इति प्रार्थना ॥ ततः स्वस्तिवाचनं कुर्यात् ॥ स्थिरोभवेतिमंत्रेण गर्तमध्ये स्थाप्य तदुपरि मृत्तिकां दत्त्वा स्वस्तिकं लिखेत् ॥ किंचिद्दानं दत्त्वा निष्क्रम्य तत्र वास्तुदेवाग्रे प्रणमेत् ॥ धर्मस्थूणाराजॱश्रीस्तूर्यामहोरात्रेद्वाराफलके इंद्रस्यगृहावसुवतोवरूथिनस्तानहंप्रपद्येसहप्रजयापशुभिःसहयन्मेकिंचिदस्त्युपहूतःसर्वगणःसखायःसाधुसंवृतःतांत्वाशालेरिष्टवी राग्रहानःसंतुसर्वतः ॥ इति प्रणमेत् ॥ अथ होमप्रतिष्ठासंकल्पः ॥ ॐ पूर्वोच्चरितैवंगुणविशेषणविशिष्टायां पुण्यतिथौ अमु कवारनक्षत्रयोगकरणमुहूर्तमानायाममुकगोत्रोमुकशर्माहं वास्तुदेवप्रीतये होमप्रतिष्ठासिद्ध्यर्थं यदेतद्द्रव्यं ब्राह्मणेभ्यो दातु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

महमुत्सृजे ॥ कालज्ञानं कृत्वा अमुकगोत्रायामुकशर्मणे आचार्याय संपूज्यालंकृतां सवत्सां गां वासोयुगलं दक्षिणां च सुवर्णं दातुमहमुत्सृजे ॥ ऋत्विग्भ्यः हिरण्यदक्षिणां दातुमहमुत्सृजे ॥ अन्येभ्योपि हिरण्यतन्निष्क्रयद्रव्यं रजतादि वा दातु महमुत्सृजे ॥ ततो गणेशादिग्रहाणां शिख्यादीनां च प्रीत्यर्थं प्रत्येकं त्रीन् त्रीन् एकैकं यथाशक्ति वा ब्राह्मणानहं भोज यिष्ये वा सहस्रं ( १००० ) ब्राह्मणान् अथवाष्टोत्तरशतं ( १०८ ) । कुमारीः तिस्रः ( ३ ) । सुवासिनीः सप्तविंशतिकाः ( २७ ) । बटुकमेकं (१) यथाशक्ति वा भोजयिष्ये । भैरवपात्रपूर्णं ब्राह्मणादिभ्यो भूयसीदक्षिणादानं दातुमहमुत्सृजे ॥ इति संकल्पः ॥ पश्चाच्चतुष्पथे बलिदानम् ॥ शूर्पमध्ये पिष्टदीपमाषान्नदध्योदनहरिद्रारक्तपुष्पाणि स्थाप्य गीतवादित्रादिपूर्वकं कुटुंबैः सह चत्वरे गत्वा तत्र तं शूर्पं स्थाप्य गंधपुष्पादिभिः पूजनं कुर्यात् ॥ तत्र मंत्राः ॥ बलिं गृण्हंतु ते देवा आदित्या वसवस्तथा ॥ मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ १ ॥ जृंभकाः सिद्धगंधर्वा माला विद्याधरा नगाः ॥ असुरा यातुधानाश्च पिशाचा डाकिनीगणाः ॥ शक्तयो रक्षवेताला ये च विघ्नविनायकाः ॥ २ ॥ जगत्यां शांतिकर्तारः क्रमाद्ब्राह्मश्चैव मातरः ॥ मा विघ्नं मा च मे रोगो मा संतु परिपंथिनः ॥ ३ ॥ सौम्या भवंतु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥ ते सर्वे तृप्तिमायांतु वास्तुदेवप्रसादतः ॥ ४ ॥ पश्चात्तांबूलदक्षिणां दत्त्वा नमस्कारं कृत्वा गीतवादित्रादिपुरःसरं बहुजनैः सह गृहे आगत्य पुनः द्वारशालायां घृतेन वसोर्द्धारां [illegible] कुर्यात् ॥ पश्चाद्वास्तुमंडले ब्रह्मस्थाने सुरूपां च दिव्याभरणभूषितां



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

स्त्रीरूपां पृथिवीं ध्यात्वा भूमिं पूजयेत् ॥ धरायै नमः इति मंत्रेण गंधादिभिः समभ्यर्च्य ततो गृहप्रागादितः त्रिगुणीकृतरक्त सूत्रेण गृहं परिवेष्टयेत् ॥ रक्षोघ्नपावमानेन च सूक्तेन भवनादिकम् ॥ ॐ रक्षोहणं वलगहनंवैष्णवीमिदमहंतंवलगमुत्किरामियंमेनिष्टयोयममात्योंनिचखानेदमहंतंवलगमुत्किरामियंमेंसमानोयमसमानोनिचखानेदमहंतंवलगमुत्किरामियंमेसबंधुर्यमसबन्धुर्निचखानेदमहंतंवलगमुत्किरामियंमेंसजातोयमसंजातोनिचखानोत्कृत्यांकिरामि ॥ १ ॥ रक्षोहणोंवोवलगहनःप्रोक्षामिवैष्णवान् रक्षोहणोंवोवलगहनोवनयामिवैष्णवान् रक्षोहणोंवोवलगहनोऽवस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाउपदधामिवैष्णवीरक्षोहणौवांवलगहनौपर्य्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्थ ॥ २ ॥ पवमानःसो अद्यनःपवित्रेणविचर्षणिः ॥ यःपोता सपुनातुमा ॥३॥ इति रक्षोघ्नपवमानर्क्क् ॥ अत्र ध्वजारोपणं पूजनं च ॥ तस्मिन्पक्षे पूर्वादिक्रमेण पीतरक्तकृष्णनीलश्वेतधूम्र हरितमेघवर्णाः कार्याः ॥ मेघवर्णस्थाने श्वेतवर्णो वा कार्यः ॥ ईशानपूर्वयोर्मध्ये गृहमध्यभागे वा सर्ववर्णपताका मेघवर्णा ब्रह्मणे कार्याः ॥ नैर्ऋत्यपश्चिमयोर्मध्ये रक्तां पताकामनंताय ॥ अत्र पताका हस्तदीर्घा त्रिकोणा कार्या ॥ इदं च पताकोच्छ्रयणमनावश्यकं कृते फलाधिक्यमस्ति ॥ तत्रमंत्राः ॥ कृणुष्वपाज० कांडिका ॥ ९ ॥ पुनंतुमा० कांडिका ॥ ८ ॥ तत्र अच्छिन्नसूत्रे शुभं ततो दुग्धपूर्णया स्तनकुंभ्या जलपूर्णया च स्तनकुंभ्या तथैव धाराद्वयम् अविच्छिन्नं कुर्यात् ॥ तत्र ऋचंवाचम् अध्यायं संपूर्णं पठेत् ॥ तमाह ॥ ॐ ऋचंवाचंप्रपद्येमनोयजुःप्रपद्येसामप्राणं प्रपद्ये चक्षुःश्रोत्रंप्रपद्ये ॥ वागोजःसहौजोमयिप्राणा

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पुनौ ॥१॥ यन्मेंच्छिद्रंचक्षुषोहृदंयस्यमनसोवातितृणंबृहस्पातिर्मेतद्दधातुशंनोंभवतुभुवंनस्ययस्पतिः ॥ २ ॥ ॐभूर्भुवःस्वःतत्स
वितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ३ ॥ कयांनश्चित्राआभुवदूतीसदावृधः सर्खा ॥ कयाशचिष्ठयावृता
॥ ४ ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेवसु ॥ ५ ॥ अभीषुणःसखीनामविताजरितृणाम् ॥ शतंभ
वास्यूतिभिः॥६॥ कयात्वंनऊत्याभिप्रमंदसेवृषन् ॥ कयास्तोतृभ्यआभर ॥७॥ इंद्रोविश्वस्यराजति ॥ शन्नोंअस्तुद्विपदेशंचतु
ष्पदे ८॥शन्नोंमित्रःशंवरुणःशन्नोंभवत्त्वर्यमा॥ शंनइंद्रोबृहस्पतिः शंनोविष्णुरुरुक्रमः॥९॥शंनोवातःपवताशंनस्तपतुसूर्यः ॥
शंनःकनिक्रदद्देवःपर्जन्योअभिवर्षतु ॥ १० ॥ अहानिशंभवंतुनशरात्रीःप्रतिधीयताम् ॥ शन्नऽइंद्राग्नीभवतामवोभिःशंनइंद्रा
वरुणारातहव्या ॥ शंनइंद्रापूषणावाजसातौशमिंद्रासोमासुवितायशंयो ॥ ११ ॥ शंनोंदेवीरभिष्टय आपोभवंतुपीतये ॥ शंयोर
भिस्रवंतुनः ॥ १२ ॥ स्योनापृथिविनोभवानृक्षरानिवेशनीयच्छानःशर्मसप्रथाः ॥ १३ ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदं
धातन ॥ महेरणायचक्षसे ॥ १४ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ १५ ॥ तस्माअरंग
मामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १६ ॥ द्यौःशांतिरन्तरिक्षशांतिःपृथिवीशांतिरापःशांतिरोषधयः
शांतिः ॥ वनस्पतयःशान्तिर्विश्वेदेवाःशांतिर्ब्रह्मशांतिःसर्वशांतिःशांतिरेवशांतिःसामाशांतिरेधि ॥ १७ ॥ दृतेदृंहमा
मित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षंताम् ॥ मित्रस्याहंचक्षुषासर्वाणिभूतानिसमीक्षताम् ॥ मित्रस्याहं चक्षुषासर्वाणि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





भूतानि॒सर्मीक्षेमित्रस्य॒चक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳहमाज्योक्तेंसुंदृशिजीव्यासुंज्योक्तेंसुंदृशिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेअस्त्वर्चिषे ॥ अन्यांस्ते अस्मत्तपन्तुहेतयः पावकोअस्मभ्यꣳशिवोभव ॥ २० ॥ नमस्तेअस्तु विद्युतेनमस्तेस्तनयित्नवे ॥ नमस्ते भगवन्नस्तुयतःस्वःसमीहसे ॥ २१ ॥ यतोयतःसमीहसेततोनोअभयंकुरु ॥ शंनः कुरुप्रजाभ्योऽभयंनःपशुभ्यः ॥ २२ ॥ सुमित्रियानआपओषधयःसंतुदुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः ॥ ॥ २३ ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतꣳशृणुयामशरदःशतंप्रब्रवामशरदःशतमदीनाः स्यामशरदःशतंभूयश्चशरदःशतात् ॥ २४ ॥ एतदध्यायं पठन्गृहस्याभितोऽविच्छिन्नदुग्धजलधारां दद्यात् ॥ ततो यजमानः गृहस्य आग्नेयकोणे आकाशपदे जानुपरिमितगर्तखननसंभूतां मृत्तिकां चतुर्दिक्षु निक्षिपेत् ॥ खातं गोमयेनोपलेपयेत् ॥ चंदनपुष्पाक्षतसंतधान्यानि च प्रक्षिप्य सुवर्णशलाकया मध्ये अष्टदलं लिखेत् ॥ तत्र पूजावादित्रमंगलादिकं कुर्यात् ॥ सर्वे ब्राह्मणाः श्रीसूक्तं पठेयुः ॥ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ १ ॥ तांम आवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविन्देयंगामश्वंपुरुषानहम् ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रमोदिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीर्जुषताम ॥ २ ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् । पद्मेस्थितांपद्मवर्णांता

टि० १ यवगोधूमधान्याकतिलाः कंगुस्तथैव च ॥ श्यामाकाश्चणकाश्चैव सप्तधान्यमुदाहृतम् ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

मिहोपह्वयेश्रियम् ॥ ४ ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् । तांपद्मनेमिंशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतां
त्वावृणोमि ॥ ५ ॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअ
लक्ष्मीः ॥ ६ ॥ उपैतुमांदेवसखः कीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिं वृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामला
ज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसंमृद्धिंचसर्वांनिर्णुद मे गृहात् ॥ ८ ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् । ईश्वरीं
सर्वभूतानांतामिहोपह्वयेश्रियम् ॥ ९ ॥ मनसः काममाकूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्यस्यमयिश्रीःश्रयतांयशः ॥
॥ १० ॥ कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम ॥ श्रियंवासयमेगृहेमातरं पद्ममालिनीम् ॥ ११ ॥ आपः सृजंतुस्निग्धा
निचीक्लीतवसमेगृहे ॥ निचदेवींमातरं श्रियंवासयमेकुले ॥ १२ ॥ आर्द्रांयःकरिणींयष्टींसुवर्णांहेममालिनीम् ।
सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ १३ ॥ आर्द्रांपुष्करिणीं पुष्टींपिंगलांपद्ममालिनीम् ॥ चंद्रांहिरण्मयींलक्ष्मीं
जातवेदोममावह ॥ १४ ॥ तामआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतिंगावोदास्योश्वान्विदेयं
पुरुषानहम् ॥ १५ ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम् ॥ श्रियःपंचदशर्चंयः श्रीकामःसततंजपेत् ॥ १ ॥
अश्वदायैगोदायैधनदायैमहाधने ॥ धनंमेजुषतांदेविसर्वकामांश्चदेहिमे ॥ २ ॥ पुत्रपौत्रधनंधान्यंहस्त्यश्वादिगवेरथम् ॥ प्रजा
नांभवसिमाताआयुष्मंतंकरोतुमे ॥ ३ ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः ॥ धनमिंद्रोबृहस्पतिर्वरुणंधनमुत्सृजे ॥ ४ ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोम्यहंददातुसोमिनः ॥ ५ ॥ नक्रोधोनचमात्सर्यंनलोभोनाशुभा मतिः ॥ भवंतिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ पद्मानने पद्मऊरुपद्माक्षिपद्मसंभवे ॥ तन्मेभजसिपद्माक्षियेनसौख्यंलभा म्यहम् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानंमहीयते ॥ धनंधान्यंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ इति श्रीसूक्तं पठित्वा प्रार्थयेत् ॥ यावच्चंद्रो नगाः सूर्यस्तिष्ठंति प्रतिपादिताः ॥ तावत्त्वयात्र देवेश स्थेयं भक्त्यानुकंपया ॥ १ ॥ इति पुष्पांजलिः ॥ खातमध्ये सुवर्णदध्योदनशैवालप्रक्षेपः ॥ पुष्पाक्षतं गृहीत्वा नमस्कारं कुर्यात् ॥ पुनः कुंभमेकं जलपूर्णं गंधादिभिरभ्यर्च्य यजमानो हस्तद्वयेन कुंभमादाय जानुभ्यामवनीं गत्वा ॐ नमो वरुणाय इति खातमध्ये स्थाप्य वरुण मंत्रैरभिमंत्रयेत् ॥ ॐ वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुण स्यऽऋतसदनमासीद ॥ १ ॥ ॐवरुणःसविता० वा ॥ ॐवरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः ॥ करतांनःसुराधसः ॥ ॥ २ ॥ ॐ उरुꣳहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाउ ॥ अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ नमो वरुणायाभिष्ठितोवरुणस्यपाशः ॥३॥ इमंमेवरुणश्रुधिहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ४ ॥ इतिमंत्रैर्गर्त्तमध्ये जलं पूर येत् ॥ मध्येसप्तधान्यानि प्रक्षिपेत् ॥ तत्र मंत्राः ॥ अन्नं प्रजापतिः साक्षादन्नमेव प्रजापतिः ॥ अन्नाद्भवंति भूतानि जगदन्नेन वर्द्धते ॥ १ ॥ तत्रावर्त्ते प्रदक्षिणे पुष्पे चोर्ध्वमुखे शुभं वैपरीत्येऽशुभम् ॥ पश्चाच्छुद्धमृत्तिकया गर्तं पूरणीयं मृत्पेटिकां



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तन्मध्ये सप्तधान्यानि शैवालदध्योदनसक्तुसहितवास्तुप्रतिमां स्थापयेत् ॥ पेटिकामासाद्य तस्मिन्गर्ते मृदापूरिते मृद आधिक्ये उत्तमं साम्ये मध्यमं न्यूनत्वेऽशुभम् ॥ गर्तोपरिभूमिं गोमयेनोपलिप्य तत्र चंदनपुष्पाक्षतप्रक्षेपः पश्चाद्वास्तुदेवतानां पूजनं नारिकेलपुष्पाक्षतान्गृहीत्वा वास्तुदेवताप्रार्थनां कुर्यात् ॥ तत्र मंत्राः ॥ पूजितोसि मया देव होमाद्यैरर्चनैः शुभैः ॥ प्रसादं कुरु देवेश· देहि मे गृहजं सुखम् ॥ १ ॥ वास्तुदेव नमस्तेऽस्तु भूशय्यादिरतः प्रभो ॥ मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा ॥ २ ॥ भगवन् देवदेवेश त्वं तातः सर्वदेहिनाम् ॥ यज्ञरूपेण भगवंस्त्वया व्याप्तं चराचरम् ॥ ३ ॥ जानताऽजानता वापि शास्त्रोक्तं न कृतं हि यत् ॥ तच्च संपूर्णमेवास्तु प्रसन्नो भव सर्वदा ॥ ४ ॥ स्वागतं देव देवेश मद्भाग्यात्त्वमिहागतः ॥ प्राकृतं त्वं च मां दृष्ट्वा बालवत्प्रतिपालय ॥ ५ ॥ पुनः प्रार्थना ॥ यथा त्वं धरणीं कृत्स्नां सर्वदा धरसि प्रभो ॥ हिताय सर्वलोकानां तथा धारय मद्गृहम् ॥ १ ॥ इष्टान्कामान्प्रयच्छ त्वं दुरिष्टं च विनाशय ॥ पुत्रपौत्रादिवृद्धिं च सततं कुरु देव नः ॥ २ ॥ सशैलसागरां पृथ्वीं यथा वहसि मूर्द्धनि ॥ तथेदं वह कल्याणसंपत्संततिभिः सह ॥ ॥ ३ ॥ इति मंत्रेण नारिकेलं संस्थापयेत् ॥ ततः आचार्यादयः ऋत्विजः स्थापितशांतिकलशोदकेन प्रत्यङ्मुखाः प्राङ्मुखं यजमानं सपत्नीकं सर्वौषधीभिरनुलिप्य वेदोक्तमंत्रैः पौराणैश्चाभिषिच्य स्नापयेयुः ॥ तत्राभिषेकमंत्राः ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्य

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

क्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १ ॥ ॐत्रातारमिंद्रमवितारमिंद्रᳬंहवेहवेसुहवᳬंशूरमिंद्रम् ॥ ह्वयामिशक्रंपू
रुहूतमिंद्रᳬंस्वस्तिनोमघवाधात्विंद्रः ॥ २ ॥ वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुण
स्यऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ ३ ॥ भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः ॥ भगप्रणोजनय
गोभिरश्वैर्भगप्रनृभिर्नृवंतःस्याम ॥ ४ ॥ इदमापःप्रवहतावद्यंचमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणम् ॥ आपो
मातस्मादेनसःपवमानश्चमुंचतु ॥ ५ ॥ समुद्रायत्वावातायस्वाहासरिरायत्वावातायस्वाहा ॥ अनाधृष्यायत्वावाताय
स्वाहाप्रतिधृष्यायत्वावातायस्वाहा ॥ अवस्यवेत्वावातायस्वाहाशिमिदायत्वावातायस्वाहा ॥ ६ ॥ पुनंतुमादेवजनाः
पुनंतुमनसाधियः ॥ पुनंतुविश्वाभतानिजातवेदःपुनीहिमाम् ॥ ७ ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाज
स्यसंगथे ॥ ८ ॥ ॐ पंचनद्यःसरस्वतीमपियंतिसस्रोतसः ॥ सरस्वतीपंचधासोदेशेभवत्सरित् ॥ ९ ॥ शिरोमेश्रीर्यशो
मुखंत्विषिःकेशाश्चश्मश्रूणि ॥ राजामेप्राणोअमृतᳬंसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ १० ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यां
पूष्णोहस्ताभ्याम् ॥ ११ ॥ पालाशंभवति० इत्यादीन् वैदिकमंत्रान् पठित्वा पुराणोक्तान्मंत्रान्पठेयुः ॥ शक्राद्या देवताः
सर्वे ब्रह्मविष्णुमहेश्वराः ॥ सुरास्त्वामभिषिंचंतु प्रयच्छंतु वरान् वराः ॥ १ ॥ नारायणो जगन्नाथस्तथा संकर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च ऋद्धिं कुर्वंतु मे सदा ॥२॥ आदित्यश्चंद्रमा भौमो बुधजीवसिताः शनिः ॥ राहुः केतुग्रहाः सर्वे ऋद्धिं कुर्वंतु



Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ते सदा ॥ ३ ॥ इंद्रो वह्निर्यमश्चैव निर्ऋतिर्वरुणस्तथा ॥ वायुः कुबेरो रुद्रश्च दिक्पालाः पांतु ते सदा ॥ ४ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ अभिषिंचंतु ते सर्वे धर्मकामार्थसिद्धये ॥ ५ ॥ गंधर्वाः किन्नरा यक्षाः सिद्धविद्याधरोरगाः ॥ अभिनंदंतु ते सर्वे नद्यः सागरपर्वताः ॥ ६ ॥ वेदशास्त्रपुराणानि मीमांसाच्छांदसागमाः ॥ बृहत्कथादिकाः पुण्याः सर्वकष्टविनाशकाः ॥ ७ ॥ स्वाहास्वधावषट्कारजपहोमास्तथैव च ॥ मंत्रास्त्वामभिषिंचंतु षण्मुखस्तु प्रजापतिः ॥ ८ ॥ नारदाद्याः० ९ गायत्रीचैव० १० कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः कान्तिस्तुष्टिः शांतिश्च मातरः ॥ ११ ॥ ऋषयो मनवो गावो देवमातर एव च ॥ ऋषिपत्न्यो द्रुमा नागा नगाश्चाप्सरसांगणाः ॥ १२ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ यष्टयो वररत्नानि कालस्यावयवाश्च ये ॥ १३ ॥ एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये ॥ ॥ १४ ॥ पालाशं भवति० ॥ १५ ॥ यजमानः सपत्नीकः एवं स्नात्वा शुद्धवस्त्रं परिधाय ततस्तिलकाशीर्वादान् गृहीत्वा सर्वेभ्यो यथाशक्ति दानं कृत्वा पूजितग्रहाणां शिख्यादिवास्तुदेवतानां च पूजां कृत्वा क्षमापयेत् ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइन्द्रप्राशूर्भवासचा ॥ १ ॥ इति वास्तुद्वासनं ग्रहाणां विसर्जनञ्च ॥ यांतु देवगणाः सर्वे पूजामादाय पार्थिवीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ १ ॥ एवं विसृज्य सर्वोपहारान् आचार्यहस्ते प्रतिपाद्य अग्निं संपूज्य प्रार्थनापूर्वकं विसृजेत् ॥ गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ ब्राह्मणा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



न्संपूज्य करौ संपुटीकृत्य मया यत्कृतं वास्तुपूजनाख्यं कर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं भवतां ब्राह्मणानां वचनात् वास्तुपुरुषप्रसादात् सर्वं विधेः पारिपूर्णमस्तु ॥ ततः सर्वं संपूर्णमच्छिद्रमस्त्विति ब्राह्मणा वदेयुः ॥ इति प्रथमेऽह्नि वास्तु शांतिं विधाय तत्र प्रवेशविधिः ॥ स्रजं कुंभं पुरस्कृत्य धेनुं विप्रं कुमारिकाम् ॥ प्रदक्षिणं विधायाथ पृष्ठे वामे दिवाकरे ॥ द्वितीयेऽह्नि गृहप्रवेशं कुर्यात् ॥ सचेत्थम् ॥ जलपूर्णपल्लवोपेतं दूर्वायुतं सुगंधादिलिप्तं गंधपुष्पाद्यर्चितं कलशं हस्ताभ्यां गृहीत्वा यजमानो ब्राह्मणान्वितः देवगोपुरःसरः सपत्नीकः पुत्रभ्रात्रादिपरिवारैः परिवृतः तूर्यघोषेण ब्रह्मघोषेण च गृहं प्रविश्य प्रधानगृहमध्ये धान्योपरि तं कलशं स्थापयेत् ॥ ततो गृहे विप्रैः पुण्याहवाचनं कुर्यात् ॥ ब्राह्मणान्न भोजयित्वा तदाशिषो गृहीत्वा सपरिवारः सुहृद्युतो भुंजीत ॥ एवं यः कुरुते सम्यग्वास्तुपूजां समाहितः ॥ धनधान्यसमायुक्तो मोदते चोत्तमैः सुतैः ॥ १ ॥ वास्तुपूजाऽकरणे निषिद्धफलमुक्तं यमेन ॥ गृहादिकरणे यत्र नार्चिता वास्तुदेवताः ॥ तत्र शून्यं भवे त्सर्वं रक्षोविघ्नादिभिर्हरेत् ॥ तस्माद्वास्त्वर्चनं कार्यं सम्यक् संपदभीप्सुभिः ॥ वित्तशाठ्यं न कुर्वीत यदीच्छेत् क्षेममात्मनः ॥ ॥ २ ॥ इति वास्तुशांतिपद्धतिः समाप्ता ॥ अथ गृहप्रवेशांगद्वारशाखापूजनम् ॥ स्थापितासि मया शाखे सुखदा ऋद्धिदा भव ॥ पूजितासि मया भक्त्या स्थापिता च स्थिरा भव ॥ पूर्वे ॐगणपतये नमः ॥ ततो दक्षिणे धात्रे नमः ॥ वामे विधात्रे नमः ॥ स्तंभपूजा ॥ धारय त्वं महाभाग निर्मितो विश्वकर्मणा ॥ स्थापितः शुभदो नित्यं मम गेहं क्षमो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भव ॥ १ ॥ दीपस्थाने दीपाय नमः ॥ दक्षिणबाहौ एवं वामबाहौ चुल्लिस्थाने गंधर्वाय नमः ॥ संधानभांडे ज्येष्ठायै नमः ॥ जलस्थाने वरुणाय नमः ॥ पेषिण्यां सुभगायै नमः ॥ उलूखले रौद्रपीठाय नमः ॥ ॐ बलभद्रप्रियाय प्रहरणाय नमः इति मुशले ॥ शयनीये कामाय नमः ॥ पृष्ठे पुन्नगाय नमः ॥ वंशेषु किन्नराय नमः ॥ गृहमध्ये क्षेत्रपालाय नमः ॥ करंडे रक्षोजनेभ्यो नमः ॥ इति गृहप्रवेशविधिः ॥ इति श्रीजयपुरराज्यान्तर्गत–श्रीनवलदुर्गनिवासिगौडवंशोद्भव–पण्डितहूकमिचंदसूनुना पंडितश्रीरामचंद्रेण कृतो वास्तुप्रतिष्ठासंग्रहः समाप्तः ॥ अनेन श्रीगणपतिः प्रीयताम् ॥ ॥ समाप्तोऽयं ग्रन्थः ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गली खम्बाटा लैन )
स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।
संवत् १९६८, शके १८३३.

पुस्तकमिलनेका ठिकाना-
खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्-प्रेस-बम्बई.

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.


# क्रय्यपुस्तकानि–कर्मकांड ( प्रयोगादि–ग्रंथाः )।

| नाम. | की. रु. आ. |
|---|---|
| **प्रतिष्ठासंग्रह**–प्रतिष्ठा करानेके लिये यह ग्रन्थ बहुतही उत्तम है पं० रामलालजीने चार किरणों ( प्रकरणों ) में निर्माण किया है यह समंत्रक ग्रंथ सर्वसंग्रहोपयोगी है .... .... ... .... | ३–० |
| **संस्कारभास्कर**–( शुक्लयजुर्वेदीय गर्भाधानादिसे लेके सब प्रकारके संस्कारोंकी विधि, प्रयोग और मंत्रसहित ) सर्वत्रैवर्णिक यज्ञोपवीतवालेको अति उपयोगी है .... .... .... .... .... | २–१२ |
| **शान्तिप्रकाश**–इसमें पहिले गणपत्यादिपूजन पुण्याहवाचन कलशस्थापनादि और विनायकादि ३० शान्तिप्रयोग वास्तुशान्तिप्रयोगादि समंत्रकहैं .... | १–६ |
| **गौडीयश्राद्धप्रकाश महानिबंध**–इसमें श्राद्धस्वरूप श्राद्धमें ब्राह्मण-लक्षण महालयादिनिर्णय और श्राद्धप्रयोग क्षयाहश्राद्ध संकल्पश्राद्ध हेमश्राद्ध एकादशादिश्राद्ध मासिकश्राद्ध मघादिश्राद्ध नांदिश्राद्धादि बहुतसे श्राद्ध और विष्ण्वादिपूजन. पितृतर्पणादि अपूर्व संग्रह है चारोंवर्णोंको उपयोगी है .... | ३–० |

| नाम. | की. रु. आ. |
|---|---|
| **ग्रहशान्ति**–(शुक्लयजुर्वेदोक्त) यज्ञोपवीत विवाहादि शुभकर्ममें बहुत उपयोगीहै | ०–८ |
| **श्राद्धप्रयोगावली**–( शुक्लयजुर्वेदीय ) गुर्जर और दाक्षिणात्यलोगोंको अत्यन्तोपयोगी .... .... .... .... .... | ०–१४ |
| **नवग्रहविधानपद्धति**–मनुष्यको ग्रह अरिष्ट होनेपर प्रत्येक ग्रहके स्तोत्र-पाठादि पढनेको अवश्य लेना चाहिये .... .... .... | ०–४ |
| **पूजापंकजभास्कर**–( पांचोंदेवताओंके वैदिकमंत्रोंसे यथोपचार पूजाप्रकरणहै) | २–० |
| **श्राद्धविवेक**–सब प्रकारके श्राद्धकी विधि प्रमाणयुक्त .... .... | ०–१२ |
| **श्राद्धमयूख**– .... .... .... .... .... | ०–८ |
| **व्रतोद्यापनकौमुदी**–व्रतोंके उद्यापनमें अतिउत्तम है .... .... | ०–८ |
| **गयायात्रापद्धति**–( गयाजीमें श्राद्धादि करनेकी विधि है ) .... | ०–४ |
| **वासिष्ठीहवनपद्धति**–इसमें कलशादिस्थापन गणपतिपूजन पुण्याहवाचन मातृकापूजन नांदीश्राद्ध ग्रहमखादि सुगमरीतिसे हैं .... .... | ०–४ |


CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

जाहि-

| नाम. | की. रु. आ. |
|---|---|
| लंबोदरीहवनपद्धति .... .... .... .... | ०—४ |
| विवाहपद्धतिमूल—कन्यादानादि संकल्प चतुर्थीकर्मादि विषय हैं .... | ०—६ |
| विवाहपद्धतिमूल—पं० चतुर्थीलालजीकृत .... .... .... | ०—४ |
| नित्यकर्मप्रयोगमाला—पं० चतुर्थीलालजीकृत ... .... | ०—६ |
| यज्ञोपवीतपद्धति—मूल इसमें यज्ञोपवीतका संपूर्ण संस्कार और वेदारंभादि विषय हैं =) तथा भाषाटीका .... .... ... .... | ०—८ |
| दशकर्मपद्धति—इसमें गर्भाधान पुंसवन सीमंतोन्नयन नामकर्म निष्क्रमण अन्नप्राशन चूडाकर्म कर्णवेध उपनयन वेदारंभ समावर्तन विवाह चतुर्थीकर्मादि विषय है .... .... .... .... .... | ०—७ |
| कुशकंडिकाभाष्य—इनमें कुंड और स्थंडिलादिकीविधि ब्रह्मास्थापन आदि विषय हैं.... .... .... .... .... .... | ०—४ |
| वेदोक्तशिवार्चनपद्धति—वैदिक मंत्रोंसे शिवजीका न्याससमेत सांगोपांग पूजाविधान प्रयोग समेत ... .... ... .... | ०—४ |
| वृद्धिश्राद्ध—इसमें वृद्धिश्राद्धादिनिर्णय नान्दीमुखश्राद्ध आभ्युदयिकश्राद्धादि प्रयोग हैं .. .... .... .... .... ... | ०—४ |

| नाम. | की. रु. आ. |
|---|---|
| सपात्रिकपार्वणश्राद्धप्रयोग—कन्यागत सूर्यस्थके अपरपक्षमें महालय-श्राद्धप्रयोग मूलमात्र .... .... .... .... .... | ०—२ |
| ,, तथा भाषाटीका .... .... ... .... ...., | ०—४ |
| ,, तथा संस्कृतटीका .... ... .... .... .... | ०—४ |
| सांवत्सरिकैकोद्दिष्टश्राद्धप्रयोग—( मृतकोंके क्षयतिथि श्राद्धप्रयोग ) | ०—२ |
| ,, तथा भाषाटीकासमेत.... ... .... .... | ०—३ |
| वरदगणेशपूजा—अर्थात् भाद्रपद शुक्ल चतुर्थीको गणेशपूजन प्रयोग .... | ०—१ |
| कात्यायनीशान्तिः—अर्थात् कात्यायनसूत्रानुसारी ग्रहशान्तिप्रयोग .... | ०—२ |
| जलाशयोत्सर्गप्रकाश—( महानिबंध ) अर्थात् वापी कूप तडागादिकोंकी शान्ति—कलशस्थापनसे लेके होमतक भलीभांतिहै ... .... | १—१२ |
| बृहत्प्रतिष्ठाप्रकाश—पं० चतुर्थीलालजीकृत कर्मकाण्डियोंको परमोपयोगीहै | १—८ |
| वास्तुशांतिप्रयोग—अर्थात्—समस्त नूतन मकानोंका वैदिक मंत्रोंसे शान्तिका प्रयोग लिखा गयाहै .... .... .... .... | ०—६ |
| संस्कारमयूख .... .... .... ... ... | ०—१२ |

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

| नाम. | की. रु. आ. |
|---|---|
| **प्रेतमंजरी**–भाषाटीकासमेत इसमें वैतरणीदान प्रेतका दाहविधि दशाहिश्राद्ध एकादशाहश्राद्ध वृषोत्सर्ग शय्यादानादि सपिंडीश्राद्ध षोडशमासिकश्राद्धप्रयोग त्रयोदशाहे पददानादिदर्शायाहै .... .... .... .... | ०–६ |
| **शूद्रविवाहविधि**–( नामहीसे समझलेना ) .... .... .... | ०–२ |
| **शूद्रश्राद्धपद्धति**–( शूद्रोंको पुराणोक्त मंत्रोंसे श्राद्धकरनेकी विधि ) .... | ०–८ |
| **संस्कारप्रकाश**–गौडसंप्रदायका कर्मकांडी दशसंस्कारोंका अत्युत्तम ग्रंथ.... | १–४ |
| **बृहत्कर्मकांडसमुच्चय**–इसमें मरणसमयसे लेकर मरण विधान अन्त्येष्टिकर्म तथा शांतिके वर्णनहैं... .... ... .... .... | ०–६ |
| **विनायकशान्तिः**–( गणेशका पूजन और होम ) .... .... | ०–२ |
| **अष्टशांतिः**–इसमें सूर्यादिग्रह, सप्तग्रहयोग, मघारेवत्यादि, ज्वरादिरोगोत्पत्ति, सर्वनक्षत्र, ग्रहण, काकमैथुनदर्शन, पल्लीसरठपतन ये आठ शान्तिहैं .... | ०–२ |
| **मूलशान्तिः**–मूलनक्षत्रमें जन्मका शांतिप्रयोग .... .... .... | ०–२ |
| **आश्लेषाशान्ति ज्येष्ठाशान्तिश्च**–आश्लेषा और ज्येष्ठा नक्षत्रमें शान्तिका प्रयोगः .... .... .... .... .... | ०–२ |
| **जन्मदिनपूजापद्धति**–अर्थात् प्रतिवर्ष अपने२जन्ममें पूजनीयदेवकापूजनादि | ०–१॥ |

| नाम. | की. रु. आ. |
|---|---|
| **गोदानपद्धति**–गौदान देनेवालेको गौका पूजन दान आदि संकल्प .... | ०–१॥ |
| **नवरत्नविवाहपद्धति**–भा. टी. इसमें विवाहप्रश्न वैधव्ययोगशान्ति सावित्रीव्रतविधान पिप्पलविवाह कुंभविवाह आदि अच्युतविवाह विधानमंडपचित्र स्वस्तिवाचन गणपतिपूजन, ग्रहशान्ति प्रतिज्ञासंकल्प कन्यादानसंकल्प चतुर्थीकर्मादि बहुतसे विषयहैं ... .... .... .... | १–४ |
| **वैवाहपद्यावली**–भाषाटीका समेत अर्थात् कन्यापक्ष और वरपक्षमें उत्तमोत्तम काव्यसे प्रशंसा विनतीमें वर्णन की है .... .... .... | ०–१२ |
| **मंगलाष्टकशाखोच्चार**–विवाहमें नीतियुक्त मधुर वचन बोलनेकी .... | ०–१॥ |
| **पंचमहायज्ञ**–सटीक अर्थात् संध्या तर्पण नित्यश्राद्ध बलि वैश्वदेवकर्म तथा प्रायश्चित्त यज्ञ है .... .... .... .... .... | ०–४ |
| ” तथा भाषाटीका सहित .... ... .... ... | ०–३ |
| **स्वस्तिवाचन ( पुण्याहवाचन )**–प्रायः समस्त शुभकर्ममें पढाजाताहै | ०–१॥ |
| **सकामशिवपूजनविधान**–( वैदिक तांत्रिक मंत्रोंसे शिवपूजन ) भाषाटीकासमेत .... .... .... ... .... | ०–४ |

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



जाहि-

| नाम. | की. रु. आ. |
|---|---|
| **उपाकर्मपद्धति**-( शुक्लयजुर्वेदकी श्रावणी अर्थात् श्रावणशु० १५की ) नूतन यज्ञोपवीत धारणकरनेका स्नानविधिसमेत प्रयोग .... .... | ०-८ |
| **वेदोक्तगृहवास्तुपद्धति** .... .... .... .... | ०-६ |
| **तुलसीपूजापद्धति** .... .... .... .... .... | ०-१॥ |
| **तुलसीविवाहविधि** .... .... .... .... | ०-२ |
| **समंत्रकनवरात्रपद्धति**-सोधारा कथासहिता.... .... .... | ०-६ |
| **हेमाद्रिप्रयोग** .... .... .... .... .... | ०-२ |
| **भद्रमार्तंड**-कर्मकाण्डमें आवाहित देवताओंके बैठनेके लिये भद्र बनाये जातेहैं । क्योंकि उनके विना यज्ञादि बडे २ अनुष्ठान पूर्णही नहीं होते । अतएव उक्तग्रन्थमें ब्रह्मा विष्णु शिव गौरी गणेश आदि देवताओंके अनुष्ठानके उपयोगी स्वस्तिक, लिङ्गतोभद्र, अष्टदल गौरी तिलक आदि भद्रोंके चित्र और उनके बनानेकी विधि वर्णित है .... .... .... | १-० |

| नाम. | की. रु. आ. |
|---|---|
| **श्राद्धविधान**-भाषाटीकासमेत .... .... .... .... | ०-७ |
| **ज्येष्ठाशान्तिः**-ज्येठानक्षत्रमें जननादिशांति .... .... .... | ०-१॥ |
| **धनिष्ठापंचकशांतिः**-धनिष्ठासे रेवतीतक नक्षत्रमें पंचक आते हैं उनकी शान्ति .... .... .... .... .... .... | ०-२ |
| **तुलसीविवाहपद्धतिः**-कार्तिकशुद्ध० ११ को तुलसी और भगवान्‌की लग्नविधिः .... .... .... .... .... | ०-२ |
| **नवग्रहकांडी**-( नित्यपूजाविधानपद्धति वैदिकमन्त्रोंसे ) .... .... | ०-१॥ |
| **संध्यायजुर्वेदी मूल** .... .... .... .... | ०-१॥ |
| तथा भाषाटीका संध्या किसप्रकारसे करना यह भाषामें लिखा गयाहै .... | ०-१॥ |
| **संध्यावंदन**-तीनटीकाओं समेत .... .... .... .... | ०-६ |
| **संध्यावैष्णवी** .... .... .... .... .... | ०-१ |
| **संध्या**-क्षत्रियकी -) और वैश्योंकी.... .... .... .... | ०-१ |

संपूर्ण पुस्तकोंका " बडासूचीपत्र " अलग है मँगालीजिये विनादाम भेजाजाता है.

**पुस्तक मिलनेका पता-खेमराज श्रीकृष्णदास,-" श्रीवेङ्कटेश्वर " स्टीम्-प्रेस-बंबई.**

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

# अत्रेयमभ्यर्थना ।

अत्रास्माकं मुद्रणालये ऋगादयो वेदा उपनिषदो वेदान्तग्रंथा महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः, काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः, सहस्रनामाद्यनेकस्तोत्रग्रन्थाः, विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

अधिकमस्मदीयसूचीपत्रेण "श्रीवेङ्कटेश्वरसमाचार" पत्रद्वारा च ज्ञेयमिति शम् ।

खेमराज श्रीकृष्णदास- "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालयाध्यक्ष-मुंबई.

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

